**युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः। तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । किं त्वेकवचनमेव । तस्यौत्सर्गिकत्वेन**

---

मिति सिद्धान्तात् । एवञ्च फलोत्पत्त्यनुकूलव्यापारात्मिका क्रिया धात्वर्थ इति सिद्धम् । एतेन क्रियावाची धातुः धातुवाच्या क्रियेत्यन्योन्याश्रयोऽपि निरस्त । उत्पत्त्यनुकूलव्यापारस्यैव क्रियात्वात् । तदुक्तम् । व्यापारो भावना । सैवोत्पादना सैव क्रियेति । ननु उत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धातुवाच्यत्वे सर्वेषा धातूनामेकार्थत्वापत्तिः । विक्लित्त्यादितत्तत्फलोत्पत्त्यनुकूलव्यापारार्थकत्वन्तु न सम्भवति । एकैकस्य धातोर्विक्लित्त्यादितत्तत्फलाशे तदनुकूलव्यापारात्मकव्यापारसामान्ये च वाचकत्वानुपपत्तेरित्यत आह । **सा च धातुत्वेन सकलधातुवाच्येति** ॥ पच्यादयो धातुत्वेन रूपेण उत्पत्त्यनुकूलव्यापारात्मिका क्रियामाहु । पचित्वादिविशेषरूपेण तु विक्लित्त्यादितत्तत्फलाशमाहुः । तथाच वाचकतावच्छेदकभेदाद्विक्लित्त्यादिफलविशेषस्य क्रियासामान्यस्य च वाच्यता सङ्गच्छते इति भावः । तथाच भट्टिराह । 'विभज्य सेना परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथ । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥' इति । अस्तिभवतिविद्यतीनामपि सत्तानुकूलव्यापार एवार्थः । तत्र सत्ता आत्मभरणम् । तदनुकूलव्यापारस्तु जायते अस्ति विपरिणमते, वर्धते, अपक्षीयते, विनश्यति, इति वार्ष्यायणिप्रणीतषड्भावविकारेष्वन्यतमो यथायथ ज्ञेयः । भूवादिसूत्रे भाष्ये स्पष्टमेतत् । प्रपञ्चितञ्च मञ्जूषायामित्यलम् । ननु उत्पादनात्मकक्रियारूपस्य भावस्य धातुवाच्यत्वे लः कर्मणि च भावे च इति भावे कथ लकारविधि । अनन्यलभ्यस्यैव शब्दार्थत्वादित्यत आह । **भावार्थकलकारेणानूद्यते इति** ॥ द्वौ त्रयः इत्यादौ द्विवचनबहुवचनवदिति भाव । **युष्मदस्मद्भ्यामिति** ॥ युष्मदि अस्मदीति च तिङ्समानाधिकरणे उपपदे मध्यमोत्तमपुरुषौ विहितौ । युष्मदस्मदोस्तिङ्सामानाधिकरण्यञ्च तिङ्वाच्यकारकवाचित्वमेव । लकारे तु आस्यते त्वया आस्यते मया इत्यादौ भाव एव लकारादेस्तिङ्वाच्य । नतु युष्मदस्मदर्थौ । अतो न मध्यमोत्तमावित्यर्थ. । कर्मलकारे तु त्व वन्द्यसे अह वन्द्ये इत्यादौ लकारस्य युष्मदस्मदोश्च सामानाधिकरण्यसम्भवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते । **तिङ्वाच्येति** ॥ सत्त्व द्रव्य लिङ्गसङ्ख्यान्वययोग्यम् । तिङ्वाच्या या भावना क्रिया सा असत्त्वरूपा लिङ्गसङ्ख्यान्वयायोग्या । शब्दशक्तिस्वभावात् । ततश्च तस्याः तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेः युवाभ्या युष्माभिर्वा आस्यते इत्यादौ न द्विवचन बहुवचनञ्चेत्यर्थः । तिङ्वाच्येत्यनेन कृद्वाच्याया. क्रियायाः लिङ्गसङ्ख्यान्वयित्वात्मक सत्त्वरूपत्वमस्तीत्युक्तम्भवति । तद्यथा । पाकौ पाका. इत्यादि । तदुक्तम् । 'सार्वधातुके यक्' इति सूत्रे भाष्ये 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति द्रव्यवत् लिङ्गसङ्ख्यान्वय लभते इत्यर्थः । शब्दशक्तिस्वभावादिति भावः । ननु तिङ्वाच्यभावनाया असत्त्वरूपतया द्विबहुवचनाभावे आस्यते इत्यादौ एकवचनञ्च न स्यादित्यत आह । **किन्त्वेकवचनमेवेति** ॥ तिङ्वाच्यभावलकारस्येति शेषः । **तस्येति** ॥ 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रन्यासं भङ्क्त्वा एकवचनद्विबहुवचनेषु द्विबहुवचनं इति सूत्रन्यासः कर्त-

संख्यानपेक्षत्वादनभिहिते कर्तरि तृतीया। त्वया मया अन्यैश्च भूयते। बभूवे।

## २७५७। स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च। (६-४-६२)

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न। इहार्धधातुके इत्यधिकृतं सीयुटो विशेषणं, नेतरेषामव्यभिचारात्। चिण्वद्भावाद्वृद्धिः। नित्यश्चायं वलिनिमित्तो विघाती। भावि-

व्यः। तत्र द्वित्वबहुत्वयोर्द्विबहुवचननियमे सति तयोरविषये एकवचनमिति लभ्यते इति भाष्ये स्पष्टम्। एवञ्च एकवचनस्य एकत्वमुत्सृज्य द्विबहुवचनान्यविषये विहितत्वेन औत्सर्गिकतया एकत्वसङ्ख्यानपेक्षत्वात् भावलकारस्य असत्त्वरूपभाववाचित्वेऽप्येकवचनमेवेति भावः। **अनभिहिते इति**॥ भावलकारे कर्तुस्तिङ्वाच्यत्वाभावेन अनभिहितत्वात्तृतीयेत्यर्थः। **त्वया मयेति**॥ त्वत्कर्तृकं, मत्कर्तृकम्, अन्यकर्तृकं, भावनमित्यर्थः। **स्यसिच्**॥ अच् हन ग्रह दृश् एषान्द्वन्द्वात् षष्ठी। उपदेश इत्यच एव विशेषणम्। नेतरेषाम्। अव्यभिचारात्। तदाह। **उपदेशे योऽजिति**॥ अजित्यस्य उपदेशान्वयित्वेऽपि सौत्रः समास। अजिति लुप्तषष्ठीकम्। वा चिण्वदिति सप्तम्यन्ताद्वतिः। स्यसिच्सीयुट्तासिष्वित्युपमेयतस्सप्तमीदर्शनात्। तदाह। **चिणीवेति**॥ **अङ्गकार्यमिति**॥ अङ्गस्येत्यधिकृतत्वादिति भावः। भावकर्मवाचिषु स्यादिष्विति नार्थः। सीयुटो लिडागमतया भावकर्मवाचित्वेऽपि स्यसिच्तासीना भावकर्मवाचित्वाभावात्। नापि भावकर्मवाचिनि प्रत्यये परे स्यादयस्तेष्वित्यर्थ.। स्यसिच्तासीनां भावकर्मवाचिप्रत्ययपरत्वसम्भवेऽपि सीयुटस्तदसम्भवात्। सीयुडागमविशिष्टस्यैव लिडो भावकर्मवाचितया केवलसीयुटः भावकर्मवाचिप्रत्ययपरकत्वमास्ति। अतो विषयसप्तमीति मत्वा आह। **भावकर्मणोर्गम्यमानयोरिति**॥ इड्विधौ स्यसिच्सीयुट्तासिषु, इति सप्तमी षष्ठ्या विपरिणम्यते इति मत्वा आह। **स्यादीनामिडागमश्चेति**॥ अत्र अज्झनग्रहदृशां स्यादीनाञ्च न यथासङ्ख्यम्। व्याख्यानात्। स्यादिषु परेषु अङ्गस्य इडिति नार्थः। 'आर्धधातुकस्येड्वलादेः' इत्यत्र 'आर्धधातुके' इति योग विभज्य यावानिट् स आर्धधातुकस्यैवेति भाष्ये उक्तत्वात् णिचि यदङ्गाधिकारविहित कार्यन्तस्यैवात्रातिदेशः नतु चिणि दृष्टमात्रस्य। तेन घानिष्यते इत्यत्र 'हनो वध लिङि, लुङि च' इति चिणि दृष्टो वधादेशश्चिण्वदिति नातिदृश्यते। तस्य द्वैतीयीकत्वेन अङ्गाधिकारविहितत्वाभावात्। तथा अयिष्यते इत्यत्र इणो गादेशो न। अध्यायिष्यते इत्यत्र इडो गाडादेशो न। द्वैतीयीकत्वात् चिण्वत्त्वाभावे अयमिट् नेत्याह। **अयमिडिति**॥ सेट्कस्य वलादित्वलक्षण इट् तु स्यादेवेति भावः। ननु भूयेतेति विधिलिङि चिण्वत्त्व इट् च स्यातामित्यत आह। **इहार्धधातुके इति**॥ **नेतरेषामिति**॥ स्यसिच्तासीनां न विशेषणमित्यर्थः। **अव्यभिचारादिति**॥ स्यसिच्तासीनां सर्वत्रार्धधातुकत्वनि-

ता—भविता । भाविष्यते—भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट—भविषीष्ट ।

## २७५८ । चिण्भावकर्मणोः । (३-१-६६)

च्लेश्चिण्स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत—अभविष्यत । तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयेसे। अहमनुभूये । अन्वभावि । अन्वभाविषाताम्—अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयांबभूवे । भावयामासे । इह तशब्दस्य एशि, इट एत्वे च, कृते

---

यमादिति भावः । अत्र वार्तिकम् । "चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्व दीर्घश्चोक्तो यो मिता वा चिणिति इट्चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चाय वल्निमित्तो विघाती" इति स्यसिच्सीयुडितिसूत्रस्य वृद्ध्यादिप्रयोजनमित्यर्थः । तत्र वृद्धिं दर्शयति । **चिण्वद्भावाद्वृद्धिरिति** ॥ लुटि भू ता इति स्थिते चिण्वत्त्वात् 'अचोऽञ्णिति' इति वृद्धिरित्यर्थः । इडागमश्चेत्यपि बोध्यम् । तत्फलन्तु वक्ष्यते । तथा दाधातोर्लटि 'आतो युक् चिण्कृतो' इति युक् । तथा लृटि घानिष्यते इत्यत्र 'होहन्तेर्ञ्णिन्नेषु' इति घत्व शमेर्हेतुमण्ण्यन्ताल्लुटि शामिता, शमितेत्यत्र 'चिण्णमुलोः' इति दीर्घः । तथा अनेनैवात्र इटि कृते तस्य आभीयत्वेनासिद्धत्वात् अनिटीति निषेधाभावात् णिलोपः । तथा भाविष्यते इत्यत्र भू स्य इति स्थिते परमपि वलादिलक्षण इटं बाधित्वा नित्यत्वादनेन इट् । वल्निमित्ते इटि कृते अकृते च चिण्वदिटः प्रवृत्त्या कृताकृतप्रसङ्गित्वात् । वलादिलक्षणस्त्विट् न नित्यः । चिण्वदिटि कृते वलादित्वस्य विहतत्वेन वलादिलक्षणस्य इटः अप्रवृत्तेः । नित्यश्चायमित्यस्य चिण्वदिडिति शेषः । वल्निमित्त इत्यनन्तर इडनित्य इति शेषः । अनित्यत्वे हेतुः । **विघातीति** ॥ चिण्वदिटो वलादिनिमित्तविघातकत्वादित्यर्थः । एवञ्च सेट्कत्वेऽप्यनेनैव इट् । एतदभावपक्षे तु सेट्कत्वे वलादिलक्षण इडिति बोध्यम् । तदाह । **भवितेति** ॥ चिण्वदिडभावपक्षे वलादिलक्षण इडिति भावः । **चिण् भावकर्मणोः** ॥ **च्लेरिति** ॥ 'च्लेस्सिच्' इत्यतस्तदनुवृत्तेरिति भावः । **तशब्दे परे इति** ॥ 'चिण् ते पदः' इत्यतस्तदनुवृत्तेरिति भाव । **अभावीति** ॥ च्लेश्चिणि कृते 'चिणो लुक्' इति तशब्दस्य लोपः । चिण्विधौ तशब्दे किम् । अभाविषाताम् । अथ अनुपूर्वात् भूधातोरुपभोगार्थकात्सकर्मकेभ्यः कर्मणि लकारे विशेषमाह । **तिङोक्तत्वादिति** ॥ कर्तुस्त्वनभिहितत्वात् तृतीयैवेति भावः । तदाह । **अनुभूयते आनन्दश्चैत्रेण त्वया मया चेति** ॥ इहानन्दस्य तिङाभिहितत्वात् प्रथमेति भावः । युष्मदस्मदुपात्तयोः कर्त्रोस्त्वनभिहितत्वात् तृतीया । **अनुभूयेते इति** ॥ सुखदुःखे इति शेषः । **अनुभूयन्ते इति** ॥ सुखानीति शेष. । **णिलोपः इति** ॥ भूधातोर्णौ वृद्धौ आवादेशे भावि इति ण्यन्तात् कर्मणि लटस्तादेशे यकि णिलोप इत्यर्थः । **भावयामासे इति** ॥ प्रथमपुरुषैकवचने उत्तमपुरुषैकवचने च रूपम् । **इहेति** ॥ भावयामासे इत्यत्र

'ह एति' (सू २२५०) इति हत्वं न। तासिसाहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एति हत्वप्रवृत्तेरित्याहुः। भाविता। चिण्वदिटः आभीयत्वेनासिद्धत्वाण्णिलोपः। पक्षे भावयिता। भाविष्यते—भावयिष्यते। भाव्यताम्। अभाव्यत। भाव्येत। भाविषीष्ट—भावयिषीष्ट। अभावि। अभाविषाताम्—अभावयिषाताम्। बुभूष्यते। बुभूषांचक्रे। बुभूषिता। बुभूषिष्यते। बोभूय्यते। यङ्लुगन्तात्तु। बोभूयते। बोभवाञ्चक्रे। बोभाविता—बोभविता। 'अकृत्सार्व—' (सू २२९८) इति दीर्घः। स्तूयते विष्णुः। तुष्टुवे। स्ताविता—स्तोता। स्ताविष्यते—स्तोष्यते। अस्तावि। अस्ताविषाताम्—अस्तोषाताम्। 'गुणोऽर्ति' (सू २३८०) इति गुणः। अर्यते। स्मर्यते। सस्मरे। परत्वा-

प्रथमैकवचनतशब्दस्य 'लिटस्तझयो.' इति एशादेशे उत्तमपुरुषैकवचनस्य इटश्च 'टित आत्मनेपदानाम्' इत्येत्वे च कृते भावयामास् ए इति स्थिते 'ह एति' इति सकारस्य हकारः प्राप्तो न भवतीत्यर्थः। कुत इत्यत आह। **तासीति**॥ 'ह एति' इत्यत्र तासस्त्योरित्यनुवर्तते। तत्र एधिताहे इत्यादौ तासेस्सस्य सार्वधातुक एव एति परे हकार इति निर्विवादः। तथाविधतासिसाहचर्यादस्तेरपि सकारस्य व्यतिहे इत्यादौ सार्वधातुक एव परे प्रवृत्तिः। अतो भावयामासे इत्यत्र नास्तेस्सकारस्य हकार। एकारस्यार्धधातुकत्वादित्यर्थः। **भावितेति**॥ ण्यन्तात् भावि ता इति स्थिते परत्वाद्वलादिलक्षणामिट बाधित्वा चिण्वदिटि तस्याभीयत्वेनासिद्धत्वादनिटीति निषेधाभावाण्णिलोपे भावितेति रूपम्। अत एव चिण्वदिड्विधौ उपदेशे योऽजित्येव व्याख्यातम्, नतु उपदेशे अजन्तस्येति। तथा सति हि णिजन्तस्य उपदेशाभावान्न स्यादिति भावः। वलादिलक्षणे इटि कृते तु तस्य अनाभीयत्वेन असिद्धत्वाभावादनिटीति निषेधाण्णिलोपाभावे णेर्गुणायादेशयोः कृतयोर्भावयितेति रूपमिति मत्वा आह। **पक्षे भावयितेति**॥ अथ सन्नन्तात् भूधातो' कर्मलकारे उदाहरति। **बुभूष्यते इति**॥ यकि सनोऽकारस्य 'अतो लोप.' इति लोपः। **बुभूषिता। बुभूषिष्यते इति**॥ चिण्वदिटि वलादिलक्षणे इटि च रूप तुल्यम्। चिण्वदिड्भावपक्षेऽपि तदतिदेशेन प्राप्ता वृद्धि बाधित्वा परत्वादतो लोप'। अथ यडन्तात् भूधातोः भावलकारे उदाहरति। **बोभूय्यते इति**॥ यकि यङोऽकारस्य पूर्ववदतोलोपः। द्वियकारक रूपम्। यङ्लुगन्तात् बोभूयते इति एकयकार रूपम्। ष्टुञ्धातोः कर्मलकारे यकि तस्यार्धधातुकत्वात् 'अतो दीर्घो यञि' इत्यप्राप्तावाह। **अकृत्सार्वेति**॥ **स्ताविता—स्तोतेति**॥ चिण्वदिडभावपक्षे अनिट्कत्वान्नेट्। अथ ऋधातो. कर्मणि लकारे यकि कृते कित्त्वाद्गुणनिषेधे प्राप्ते आह। **गुणोऽर्तीति**॥ **अर्यते इति**॥ गुणे कृते रपरत्वम्। स्मृधातोः कर्मणि लकारे आह। **स्मर्यते इति**॥ 'गुणोऽर्ति' इति सयोगादित्वात् गुणे रपरत्वमिति भावः। ननु लुटि ऋ ता, स्मृ ता इति स्थिते चिण्वदिट बाधित्वा परत्वात् गुण. प्राप्नोति नित्यत्वाच्च। अकृते कृते च चिण्वदिटि गुणस्य प्राप्तेः। कृते तु गुणे रपरत्वे अजन्तत्वाभावाच्चिण्वदिडभावे अनिट्त्वाद्वलादिलक्षणेडभावे अर्ता स्मर्तेत्येव स्यात्। आरिता स्मारितेति न स्यादित्यत आह। **परत्वादि-**

न्नित्यत्वाच्च गुणे रपरे कृते अजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिता–अर्ता । स्मारिता–स्मर्ता । 'गुणोऽर्ति—' (सू २३८०) इत्यत्र नित्यग्रहणानुवृत्तेरुक्तत्वान्नेह गुणः । संस्क्रियते । 'अनिदिताम्—' (सू ४१५) इति नलोपः । स्रस्यते । इदितस्तु नन्द्यते । सम्प्रसारणम् । इज्यते । 'अयङ्यि क्ङिति' (सू २६४९) । शय्यते ।

## २७५९ । तनोतेर्यकि । (६-४-४४)

आकारोऽन्तादेशो वा स्यात् । तायते–तन्यते । 'ये विभाषा' (सू २३१९) । जायते–जन्यते ।

## २७६० । तपोऽनुतापे च । (३-१-६५)

तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । पापं कर्तृ । तेनाभ्याहत इत्यर्थः । कर्मणि लुङ् । यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः ।

---

**स्यादि** ॥ कृते गुणे रपरत्वे अजन्तत्वाभावेऽपि उपदेशे योऽच् तदन्तस्येत्युक्तेश्चिण्वदिट् निर्बाध इत्यर्थः । **आरितेति** ॥ कृतेऽपि गुणे रपरत्वे चिण्वदिटि उपधावृद्धि । **अर्तेति** ॥ चिण्वदिडभावे रूपम् । एवं स्मारिता स्मर्तेत्यपि । ननु सम्पूर्वात् कृञ. कर्मणि लकारे यकि 'रिङ् शयग्लिङ्क्षु' इति रिङादेशे 'सम्परिभ्यां करोतौ भूषणे, समवाये च' इति सुटि सस्क्रियते इति वक्ष्यते । तत्र 'गुणोऽर्ति' इनि सयोगादित्वात् गुणः स्यादित्यत आह । **नित्यग्रहणानुवृत्तेरिति** ॥ 'नित्य छन्दसि' इत्यतो नित्यमित्यनुवृत्ते' 'गुणोऽर्ति' इत्यत्र नित्य यस्सयोगादिस्तस्यैव सयोगादिलक्षणो गुण इति लभ्यते । कृञ्तु न नित्य सयोगादि । सम्परिपूर्वकत्वाभावे तदभावादिति भाव. । अथ स्रंसुधातोर्भावलकारे यकि विशेषमाह । **अनिदितामिति नलोपः इति** ॥ **इदितस्त्विति** ॥ 'टु नदि समृद्धौ' इत्यस्माद्भावलकारे यकि इदित्वान्नलोपो नेत्यर्थः । अथ यजधातोः कर्म लकारे यकि विशेषमाह । **सम्प्रसारणमिति** ॥ 'वचिस्वपियजादीनाम्' इत्यनेनेति भावः । शीङ्धातोर्भावलकारे यकि विशेषमाह । **अयङ्यि क्ङितीति** ॥ **तनोतेर्यकि** ॥ 'विड्वनोः' इत्यत' आदिति 'ये विभाषा' इत्यतः विभाषेति चानुवर्तते । तदाह । **आकारोऽन्तादेशो वा स्यादिति** ॥ शेषपूरणमिदम् । **तायते–तन्यते इति** ॥ कर्मणि लकार' । **तपोऽनुतापे च** ॥ 'च्लेस्सिच्' इत्यत. च्लेरिति 'चिण् ते' इत्यतश्चिण् इति 'न रुधः' इत्यतो नेति चानुवर्तते । चकारात् 'अच' कर्म' इत्यतः कर्मकर्तरीति समुच्चीयते । तदाह । **तपश्च्लेरित्यादि** ॥ तत्र कर्मकर्तरि कर्मकर्तृप्रक्रियायामुदाहरिष्यति । अनुतापे कर्मलकारे उदाहरति । **अन्वतप्त पापेनेति** ॥ पापेनेति कर्तरि तृतीयेति मत्वा आह । **पापङ्कर्त्रीति** ॥ अनुपूर्वस्य तपे' पश्चात्तापार्थकत्वे असङ्गतिः । नहि पापस्य सूर्यादिवत्तपनशक्तिरस्ति । शोकार्थकत्वे अकर्मकत्वापत्तिरित्यत आह । **अभ्याहत इति** ॥ अनुपूर्वस्तपिरिह उपसर्गवशात् अभिहननार्थक इति भावः । तस्य च सकर्मकत्वात् कर्मलकारः उपपद्यते इति मत्वा आह । **कर्मणि लुङिति** ॥ शोकार्थकत्वमाश्रित्य

'घुमास्था—' (सू २४६२) इतीत्त्वम्। दीयते। धीयते। 'आदेच:—' (सू २३७०) इत्यत्र अशितीति कर्मधारयादित्संज्ञकशकारादौ निषेध:। एश: आदिशित्त्वाभावात्तस्मिन्नात्त्वम्। जग्ले।

## २७६१। आतो युक्चिण्कृतो:। (७-३-३३)

आदन्तानां युगागम: स्याच्चिणि ञ्णिति णिति कृति च। दायिता—दाता। दायिषीष्ट--दासीष्ट। अदायि। अदायिषाताम्—अदिषाताम्। अधायिषाताम्—अधिषाताम्। अग्लायिषाताम्—अग्लासाताम्। हन्यते। 'अचिण्णलो:—' (सू २५७४) इत्युक्तेर्हनस्तो न। 'हो हन्ते:—' (सू ३५८) इति कुत्वम्। घानिता—हन्ता। घानिष्यते—हनिष्यते। आशीर्लिङि वधादेशस्यापवादश्चि-

---

भावे वा लुङित्याह। **यद्वा पापेन पुंसा कर्त्रेति** ॥ परिणाममसमीक्ष्य सहसा किञ्चिदकृत्य कृत्वा पश्चात् दु:खमन्वभवदित्यर्थ:। दु:खानुभव. शोक. धात्वर्थेनोपसङ्ग्रहादकर्मक। 'शुच शोके' अकर्मक.। पुत्रमनुशोचतीत्यत्र तु वियुक्तं पुत्र स्मृत्वा शोचतीत्यर्थ:। स्मरणे पुत्रस्य कर्मत्वात् द्वितीयेत्यविरोध। अथ दाधातोर्धाधातोश्च कर्मलकारे यकि विशेषमाह। **घुमास्थेतीत्त्वमिति** ॥ ग्लैधातोर्भावे लिटस्तादेशस्य एशादेशे 'आदेच.' इत्यात्त्वस्य अशितीति निषेधमाशङ्क्य आह। **आदेच इत्यत्रेति** ॥ श् चासाविच्च इति कर्मधारयाश्रयणादित्संज्ञकशकारादौ प्रत्यये परे आत्त्वस्य निषेधो लभ्यते। एश. शित्त्वेऽपि आदिभूतशकारेत्कत्वाभावान्निषेधाभावात्तस्मिन् एशि परे आत्त्व भवत्येवेत्यर्थ.। **जग्ले इति** ॥ आत्त्वे कृते 'आतो लोप इटि च' इति तस्य लोप इति भाव:। **आतो युक्** ॥ अङ्गस्येत्यधिकृतमाता विशेषितम्, तदन्तविधि.। 'अचो ञ्णिति' इत्यतो ञ्णितीत्यनुवृत्त कृत एव विशेषणम्, नतु चिण:। तस्य णित्त्वाव्यभिचारात्। तदाह। **आदन्तानामित्यादि ॥ दायितेति** ॥ चिण्वदिट्पक्षे युक्। **अदायिषातामिति** ॥ 'स्थाघ्वोरिच्च' इत्येतत् बाधित्वा परत्वाच्चिण्वदिटि कृते 'घुमास्था' इतीत्त्वन्न। अजादित्वात्। पुन: 'स्थाघ्वोरिच्च' इति तु न भवति। अझलादित्वात्। तत्र हि 'इको झल्' इति सूत्रात् झल् इत्यनुवृत्तम्। तथाच झलादिरेव सिच् किदिति लाभादिडादि: सिच् न कित्। तत्सन्नियोगादित्त्वमपि न भवतीत्याहु:। वस्तुतस्तु सत्यपि तस्मिन्नात्र काचित् क्षति:। सिच कित्त्वेऽप्यनिग्लक्षणया वृद्ध्या रूपसिद्धेरिति दिक्। अथ हनधातो कर्मलकारे आह। **हन्यते इति ॥ अचिण्णलोरिति** ॥ लुटि चिण्वदिटि वृद्धौ 'हनस्तोऽचिण्णलो' इति हनो नकारस्य तकारो न भवति। चिण्वत्त्वादित्यर्थ। **कुत्वमिति** ॥ तस्य णिति विहितस्यात्र चिण्वत्त्वात् प्राप्तिरिति भाव:। **घानिष्यते इति** ॥ 'ऋद्धनो:' इति बाधित्वा नित्यत्वाच्चिण्वदिट्। 'ऋद्धनो:' इति तु चिण्वदिटि कृते न भवतीत्यनित्यम्। तत्र वलीत्यनुवृत्तेरिति भाव:। नन्वाशीर्लिङि घानिषीष्टेत्यत्र 'हन् सीष्ट' इति स्थिते परमपि चिण्वत्त्व बाधित्वा वधादेश: प्राप्नोति। आर्धधातुके विवक्षिते विहितत्वेन वधादेशस्यान्तरङ्गत्वादित्यत आह। **आशीर्लिङि वधादेशस्यापवादश्चि-**

ण्वद्भावः। आर्धधातुके सीयुटीति विशेषविहितत्वात्। घानिषीष्ट। पक्षे वधिषीष्ट। अघानि। अघानिषाताम्—अहसाताम्। पक्षे वधादेशः। अवधि। अवधिषाताम्। अघानिष्यत—अहनिष्यत। नच स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम्। 'अङ्गस्य' (सू २००) इत्यधिकारादाङ्गस्यैवातिदेशात्। गृह्यते। चिण्वदिटो न दीर्घत्वम्। प्रकृतस्य वलादिलक्षणस्यैवेटो 'ग्रहोऽलिटि'— (सू २५६२) इत्यनेन दीर्घविधानात्। ग्राहिता—ग्रहीता। ग्राहिष्यते—ग्रहीष्यते। ग्राहिषीष्ट—ग्रहीषीष्ट। अग्राहि। अग्राहिषाताम्—अग्रही-

---

**ण्वद्भावः इति** ॥ ननु घानितेत्यादौ प्राप्तेऽपि वधादेशे आरम्भात् कथ वधादेशस्य चिण्वद्भावः अपवादः स्यादित्यत आह। **आर्धधातुके सीयुटीति** ॥ 'स्यसिच्सीयुट्' इति सूत्रे अजन्तस्य स्ये, अजन्तस्य सिचि, अजन्तस्य आर्धधातुके सीयुटि, अजन्तस्य तासौ, इत्यजन्तस्य चत्वारि वाक्यानि। एव हनदृशामप्येकैकस्य चत्वारि वाक्यानीति स्थितिः। तत्र हनः आर्धधातुके सीयुटि चिण्वदिड्विधिर्निरवकाशत्वाद्वधादेशापवाद.। अप्राप्त एव वधादेशे आरम्भात्। वधादेशस्तु न चिण्वदिटोऽपवाद। तस्य वध्यादित्यत्र कर्तरि लिङि चरितार्थत्वादिति भावः। **पक्षे इति** ॥ चिण्वत्त्वाभावपक्षे 'हनो वध लिङि' इति वधादेशे वलादिलक्षणे इटि अतो लोपे रूपम्। वधादेशस्यादन्तत्वात्। नच हनधातोरनुदात्तत्वादुपदेशे एकाच्त्वात्तदीयवधादेशस्यापि तथाविधत्वादिह कथ वलादिलक्षण इडिति वाच्यम्। 'एकाच उपदेशे' इत्यत्र अच इत्येकत्वसामर्थ्यादेकत्वे सिद्धे पुनरेकग्रहणबलेन य उपदेशे एकाजेव नतु कदाप्यनेकाजिति लभ्यते। तेन वधेर्हन्त्युपदेशमादाय एकाचोऽपि न निषेध.। आदेशोपदेशे अनेकाच्त्वादित्युक्त प्राक्। लुङि तु सिचश्चिणि उपधावृद्धौ कुत्वेन घः। आत्मनेपदेष्वन्यतरस्यामिति वधादेशाभाव। **अघानिषातामिति** ॥ चिण्वदिटि वधादेशाभावपक्षे रूपम्। **अहसातामिति** ॥ चिण्वदिडभावपक्षे 'हनः सिच्' इति कित्त्वादनुदात्तोपदेशेत्यनुनासिकलोप.। **पक्षे अवधीति** ॥ 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशपक्षे इत्यर्थः। **अवधिषातामिति** ॥ 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशस्यापि चिण्वत्त्वात् पाक्षिकतया अप्राप्तेऽपि वधादेशे चिण्वत्त्वस्यारम्भान्नापवादत्वमिति भाव। ननु चिणि वधादेशस्य दृष्टत्वात् स्यादिषु चिण्वत्त्वाद्वधादेश. स्यादित्याशङ्कय परिहरति। **नचेत्यादिना** ॥ **आङ्गस्यैवेति** ॥ वधादेशस्तु द्वैतीयीकः। न त्वङ्गाधिकारस्थ इति भाव.। अथ 'ग्रह उपादाने' इत्यस्माददुपधात् कर्मलकारे उदाहरति। **गृह्यते इति** ॥ 'ग्रहिज्या' इति सम्प्रसारणम्। अथ लुटि तासि चिण्वदिटि 'ग्रहोऽलिटि' इति दीर्घमाशङ्कय आह। **चिण्वदिटो न दीर्घत्वमिति** ॥ कुत इत्यत आह। **प्रकृतस्येति** ॥ वलादिलक्षणस्य इट. प्रकृतत्वात्तस्यैव 'ग्रहोऽलिटि' इति दीर्घविधौ ग्रहणम्। नतु चिण्वदिटः इति भाष्ये स्पष्टम्। **ग्राहितेति** ॥ चिण्वदिटि रूपम्। **ग्रहीतेति** ॥ चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो दीर्घे रूपम्। अथ दृशेः कर्म-

षाताम् । दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः किंत्त्वादम्न । अदृक्षाताम् । गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथा हि । चिण्वदिटो दीर्घो नेत्युक्तम् । अगारिध्वम् । द्वितीये त्विटि 'वृतो वा' (सू २३९१) इति वा दीर्घः । अगरीध्वम्—अगरिध्वम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः । 'लिङ्सिचोः—' (सू २५२८) इति विकल्पादिडभावे

लकारे उदाहरति । **दृश्यते इति** ॥ लिटि ददृशे । लुटि तासि चिण्वदिट्पक्षे दर्शिता । चिण्वत्त्वाभावे 'सृजिदृशो' इत्यम् । द्रष्टा । दर्शिष्यते–द्रक्ष्यते । दर्शिषीष्ट । चिण्वदिडभावे तु 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वात् 'सृजिदृशो.' इत्यम्न । नापि लघूपधगुण । दृक्षीष्ट । **अदर्शीति** ॥ चिणि लघूपधगुण । **अदर्शिषातामिति** ॥ चिण्वदिटि रूपम् । चिण्वत्त्वाभावे त्वाह । **सिचः किंत्त्वादम्नेति** ॥ 'लिङ्सिचावात्मनेपदेषु' इति सिच कित्त्वात् 'सृजिदृशोः' इत्यम्न भवति । अकितीति पर्युदासादित्यर्थः । अथ गृधातोः कर्मलकारे यकि ऋत इत्त्वे 'हलि च' इति दीर्घे, गीर्यते । जगिरे । लुटि तासि चिण्वत्त्वपक्षे, गारिता । चिण्वत्त्वाभावे वलादिलक्षणे इटि गुणे रपरत्वे गरिता–गरीता, 'वृतो वा' इति वा दीर्घः । गारिष्यते–गरिष्यते–गरीष्यते । गीर्यताम् । अगीर्यत । गीर्येत । गारिषीष्ट । चिण्वत्त्वाभावपक्षे तु 'लिङ्सिचोरात्मनेपदेषु' इति इड्विकल्प. । इडभावपक्षे 'उश्च' इति कित्त्वम् । इत्व । रपरत्वम् । 'हलि च' इति दीर्घः । षत्वम् । गीर्षीष्ट । इट्पक्षे तु, गिरिषीष्ट । लुङि अगारिष्ट । अगारिषाताम्–अगीर्षाताम्–अगरिषाताम् । इति सिद्धवत्कृत्य आह । **लुङि ध्वमि चतुरधिकं शतमिति** ॥ रूपाणीति शेषः । तदेवोपपादयति । **तथाहीति** ॥ **अगारिध्वमिति** ॥ गृ स् ध्वम् इति स्थिते चिण्वदिटि वृद्धौ रपरत्वे 'धि च' इति सलोपे रूपमिति भाव । **द्वितीये त्विटीति** ॥ चिण्वदिडभावपक्षे वलादिलक्षणे सिच इटि ऋकारस्य गुणे रपरत्वे 'धि च' इति सलोपे 'वृतो वा' इति दीर्घविकल्पे अगरिध्वम्, अगरीध्वम्, इति रूपद्वयमित्यर्थ । **एषामिति** ॥ एषां त्रयाणा रूपाणा मध्ये एकैकस्मिन् रेफस्य 'अचि विभाषा' इति लत्वम् । 'विभाषेटः' इति वा धस्य ढत्वम् । तथा धस्य तदादेशढस्य वस्य मस्य च द्वित्वत्रयमित्येव पञ्च वैकल्पिकानीत्यर्थ. । तत्र धढयोर्मस्य च 'अनचि च' इति द्वित्वविकल्पः । वकारस्य तु मय इति पञ्चमीमाश्रित्य 'यणो मय.' इति द्वित्वविकल्प इति विवेकः । यद्यपि धढयोर्वस्य मस्य च द्वित्वचतुष्टयमिति वक्तुमुचितम् । तथापि ढस्य धस्थानिकतया धढयोरेकत्वमभिप्रेत्य द्वित्वत्रयमित्युक्तिः । **इत्थमिति** ॥ एवञ्च त्रयाणामेषा लत्वविकल्पे रेफवन्ति त्रीणि, लकारवन्ति त्रीणि, इति षट् । एषु षट्सु धस्य द्वित्वविकल्पे एकधानि षट्, द्विधानि च षडिति द्वादश । तथा रेफवत्सु त्रिषु लकारवत्सु च त्रिषु ढस्य द्वित्वविकल्पे एकढानि षट्, द्विढानि च षडिति द्वादश । उभयेषामपि द्वादशानां मेळने चतुर्विंशतिः । एषु वस्य द्वित्वविकल्पे एकवानि चतुर्विंशतिः, द्विवानि चतुर्विंशतिरित्यष्टाचत्वारिंशत् । एषु मस्य द्वित्वविकल्पे एकमान्यष्टाचत्वारिंशत्, द्विमान्यष्टाचत्वारिंशदिति षण्णवतिरित्यर्थः । **लिङ्सिचोरितीति** ॥ चिण्वदिडभावपक्षे

'उश्च' (सू २३६८) इति कित्त्वम्। इत्त्वं रपरत्वं 'हलि च' (सू ३५४) इति दीर्घः । 'इणः षीध्वम्—' (सू २२४७) इति नित्यं ढत्वम् । अगीर्ढ्वम् । ढवमानां द्वित्वविकल्पेऽष्टौ । उक्तषण्णवत्या सह सङ्कलने उक्ता संख्येति ।

इट् दीर्घश्चिण्वदिट् लत्वढत्वे द्वित्वत्रिकं तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

हेतुमण्ण्यन्तात्कर्मणि लः । यक् णिलोपः । शम्यते मोहो मुकुन्देन ।

## २७६२ । चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । (६-४-९३)

चिण्परे णमुल्परे च णौ मितामुपधायाः दीर्घो वा स्यात् । प्रकृतो 'मितां ह्रस्वः' (सू २५६८) एव तु न विकल्पितः । ण्यन्ताण्णौ ह्रस्वविकल्पा-

वलादिलक्षणस्य इटो 'लिङ्सिचो.' इति विकल्पितत्वात्तदभावपक्षे 'उश्च' इति सिच. कित्त्वाद्गुणाभावे ऋत इत्त्वे रपरत्वे 'हलि च' इति दीर्घे रेफादिण. परत्वात् 'इणष्षीध्वम्' इति नित्य ढत्वे अगीर्ढ्वमिति रूपमित्यर्थ·। **ढवमानामिति** ॥ ढस्य 'अचो रहाभ्याम्' इति द्वित्वविकल्पे एकढ द्विढमिति द्वे रूपे । तयोः वस्य 'यणो मय.' इति द्वित्वविकल्पे एकवे द्वे द्विवे द्वे इति चत्वारि । एषु चतुर्षु मस्य 'अनचि च' इति द्वित्वविकल्पे एकमानि चत्वारि द्विमानि चत्वारीत्यष्टौ रूपाणीत्यर्थः। **षण्णवत्येति॥** उक्तषण्णवत्या अष्टाना मेलने सति या सङ्ख्या सिद्ध्यति सा चतुरुत्तरशतसङ्ख्या उक्तेति ज्ञेयमित्यर्थ·। उक्तप्रक्रिया श्लोकेन सगृह्णाति। **इट्दीर्घ इत्यादिना** ॥ वलादिलक्षण इट् 'वृतो वा' इति दीर्घः। अजन्तलक्षणः चिण्वदिट्, अचि विभाषा इति लत्व, विभाषेट इति वा ढत्व, धढवमाना द्वित्वत्रिकमित्यष्टाना विकल्पात् चतुरधिक शत रूपाणीत्यर्थ । शम्यते मोहो मुकुन्देनेत्यत्र प्रक्रियां दर्शयति । **हेतुमण्ण्यन्तादिति** ॥ शमधातोर्हेतुमण्णौ उपधावृद्धौ अमन्तत्वेन मित्त्वाद्ध्रस्वे शमीत्यस्मात्कर्मणि ल·, नतु भावे । हेतुमण्ण्यन्तस्य सकर्मकत्वनियमादिति भावः । **यगिति** ॥ तडि कृते 'सार्वधातुके यक्' इत्यनेनेति शेषः। **णिलोपः इति** ॥ 'णेरनिटि' इत्यनेनेति शेषः। लुटि तासि शमि इ ता इति स्थिते अमन्तत्वेन मित्त्वान्नित्यमुपधाह्रस्वे प्राप्ते । **चिण्णमुलोः** ॥ 'दोषो णौ' इत्यतो णाविति 'ऊदुपधाया गोहः' इत्यस्मादुपधाया इति 'मिता ह्रस्वः' इत्यतो मितामिति चानुवर्तते । तदाह । **चिण्परे इत्यादिना** ॥ नन्विह दीर्घग्रहण व्यर्थम् । 'चिण्णमुलोर्दीर्घः' इत्यतः अन्यतरस्यामित्येतावतैव 'मिता ह्रस्वः' इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्य विकल्पे एव दीर्घविकल्पस्य सिद्धेरित्यत आह। **प्रकृतो मितां ह्रस्व एव तु न विकल्पितः इति** ॥ कुत इत्यत आह । **ण्यन्ताण्णाविति** ॥ शमधातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याजन्तत्वाच्चिण्वदिटि तस्याभीयत्वेनासिद्धतया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति शमिता शामितेति रूपद्वयमिष्यते। ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात्। प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाभावादित्यर्थः।

सिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिद्ध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । णाविति जातिपरो निर्देशः । दीर्घग्रहणं चेदं मास्त्विति तदाशयः । शामिता—शमिता—शमयिता । शामिष्यते—शमिष्यते—शमयिष्यते । यङन्ताण्णिच् । शंशम्यते । शंशामिता—शंशमिता—शंशमयिता । यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः । ण्यन्तत्वाभावे । शम्यते मुनिना ।

---

दीर्घविकल्पविधौ तु न दोष इत्याह । **दीर्घविधाविति** ॥ दीर्घविकल्पविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत् । दीर्घविधौ स्थानिवत्त्वनिषेधात् । अतोऽत्र दीर्घविकल्पस्सिद्ध्यति । ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्त्व दुर्वारम् । तत्र स्थानिवत्त्वनिषेधाभावादित्यर्थ । **भाष्ये त्विति** ॥ न पदान्तसूत्रस्थभाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् न पदान्तसूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । सुद्ध्युपास्य इत्यत्र 'अनचि च' इति द्विर्वचनस्य शिण्ढीत्यत्र 'नश्च' इत्यनुस्वारस्य 'अनुस्वारस्य ययि' इति परसवर्णस्य च प्रतिदीव्न इत्यत्र 'हलि च' इति दीर्घस्य, सग्धिरित्यत्र 'झलाञ्जश् झशि' इति जश्त्वस्य, जक्षतुरित्यत्र 'खरि च' इति चर्त्वस्य, पूर्वत्रासिद्धीयत्वादित्यर्थः। ननु ण्यन्ताण्णौ 'चिण्णमुलोः' इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्व दुर्वारम् । 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात् । ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः । एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथ दीर्घग्रहणप्रत्याख्यानमित्यत आह । **णावितीति** ॥ 'चिण्णमुलोः' इति दीर्घविधौ चिण्परे णमुल्परे च णौ इत्यत्र णाविति णित्त्वजातिप्रधानो निर्देशः । चिण्णमुल्परकणित्त्वजातौ परतः इति लभ्यते । णित्त्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घो निर्बाध इति, न पदान्तसूत्रे दीर्घग्रहणप्रत्याख्यानभाष्यस्याशय इत्यर्थः । **शामिता-शमितेति** ॥ शमधातोर्ण्यन्ताल्लुटि तासि चिण्वदिटि दीर्घविकल्पः । **शमयितेति** ॥ चिण्वत्त्वाभावे वलादिलक्षणे इटि रूपम् । **यङन्तादिति** ॥ शमधातोर्यङि शशम्यते इत्यस्मात् हेतुमण्णौ 'यस्य हलः' इति यकारलोपे अतो लोपे शशमि इत्यस्मात् कर्मलकारे णिलोपे शशम्यते इति रूपमित्यर्थः । **शंशामिता-शंशमितेति** ॥ 'चिण्णमुलोः' इति दीर्घविकल्पः । **शंशमयितेति** ॥ चिण्वत्त्वाभावे वलादिलक्षणे इटि रूपम् । **भाष्यमते त्विति** ॥ न पदान्तसूत्रे दीर्घग्रहणप्रत्याख्यानपरभाष्यमते त्वित्यर्थ. । **यङन्तादिति** ॥ ण्यन्तादिति शेषः । यङन्ताण्णिचि यलोपे अल्लोपे च कृते शशमित्यस्माल्लुटि तासि चिण्वदिटि कृते तस्यासिद्धत्वाण्णिलोपे शंशमितेत्यत्र अल्लोपस्य स्थानिवत्त्वेन णिच्परकत्वाभावात् 'चिण्णमुलोः' इति दीर्घो नास्ति । भाष्यमते न पदान्तसूत्रे दीर्घग्रहणाभावे स्थानिवत्त्वनिषेधाभावादि-

### २७६३ । नोदात्तोपदेशस्य मान्तस्यानाचमेः । (७-३-३४)

उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति णिति कृति च । अशमि । अदमि । 'उदात्तोपदेशस्य' इति किम् । अगामि । 'मान्तस्य' किम् । अवादि । 'अनाचमेः' किम् । आचामि । 'अनाचमिकमिवमीनामिति वक्तव्यम्' (वा ४५१८) । चिणि 'आयादयः—' (सू २३०५) इति णिङभावे । अकामि । णिङ्णिचोरप्येवम् । अवामि । 'वध हिंसायाम्' । हलन्तः । 'जनिवध्योश्च—' (सू २५१२) इति न वृद्धिः । अवधि । जागृोऽविचिण्णल्ङित्सु' (सू २४८०) इत्युक्तेर्न गुणः । अजागारि ।

### २७६४ । भञ्जेश्च चिणि । (६-४-३३)

नलोपो वा स्यात् । अभाजि—अभञ्जि ।

### २७६५ । विभाषा चिण्णमुलोः । (७-१-६९)

---

त्यर्थः । **शम्यते मुनिनेति** ॥ अकर्मकत्वाद्भावे ल इति भाव । **नोदात्तोपदेशस्य** ॥ 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'अत उपधायाः' इत्यतः उपधाया इति 'अचो ञ्णिति' इत्यतो ञ्णितीति 'आतो युक्' इत्यतश्चिण्कृतोः इति चानुवर्तते । तत्र ञ्णितीति कृत एव विशेषणम्, नतु चिणः। अव्यभिचारात् । तदाह । **उपधाया इत्यादिना** ॥ अनुदात्तोपदेशास्सङ्गृहीता । ततोऽन्यस्सर्वोऽपि धातुरुदात्तोपदेश.। आङ्पूर्वश्चमिराचमिः तद्वर्जस्येत्यर्थ । **अशमि। अदमीति** ॥ शमधातोर्दमधातोश्च लुङि णिचि 'अत उपधायाः' इति वृद्धिर्न । **अगामीति** ॥ गमेरनुदात्तोपदेशत्वादिति भाव. । **अवादीति** ॥ वदधातुर्नमान्त इति भावः । **आचामीति** ॥ अनाचमेरित्युक्तेरिह नोपधावृद्धिनिषेधः । **अनाचमिकमिवमीनामिति** ॥ आचमिकमिवमिवर्जानाम्' इत्यर्थः । एवञ्च कमिवम्योरपि न निषेध इति फलितम् । ननु कमेर्णिङन्तत्वात् केवलस्य तस्य चिणादौ प्रयोग एव नास्तीत्यत आह । **चिण्यायादयः इति** ॥ **णिङ्णिचोरप्येवमिति** ॥ णिङन्ताण्णिजन्ताद्वा कमेश्चिणि णिलोपे सति पूर्ववत् रूप शिष्यते इत्यर्थः । ननु 'जनिवध्योश्च' इति वधेरुपधावृद्धिनिषेधो व्यर्थ । वधादेशस्यादन्ततया अल्लोपस्य स्थानिवत्त्वादेव अवधीत्यादौ उपधावृद्ध्यभावसिद्धेरित्याशङ्क्य वधिर्धात्वन्तर हलन्तमेव 'जनिवध्योश्च' इत्यत्र गृह्यत इत्यभिप्रेत्य आह । **वध हिंसायां हलन्तः इति** ॥ **भञ्जेश्च चिणि** ॥ 'श्नान्नलोपः' इत्यतो नेति लुप्तषष्ठीक लोप इति चानुवर्तते । 'जान्तनशा विभाषा' इत्यतो विभाषेति मत्वा शेष पूरयति । **नलोपो वा स्यादिति। अभाजीति** ॥ नलोपपक्षे उपधावृद्धि । **विभाषा चिण्णमुलो.** ॥ 'लभेश्च' इत्यतो लभेरिति 'इदितो नुम्' इत्यतो नुमिति चानुवर्तते इति मत्वा

लभेर्नुमागमो वा स्यात्। अलम्भि—अलाभि। व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम्। प्रालम्भि। द्विकर्मकाणां तु

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

(१०९०—१०९५ वार्तिकार्थः) गौर्दुह्यते पयः। अजा ग्रामं नीयते।

शेष पूरयति। **लभेर्नुमागमो वेति**॥ ननु प्रालम्भि उपालम्भीत्यादौ उपसर्गपूर्वस्यापि लभेर्नुम्विकल्पः स्यादित्यत आह। **व्यवस्थितेति**॥ प्रादेरुपसर्गात्परस्य लभेर्नित्य नुम। अनुपसर्गात्परस्य तु लभेर्विभाषा नुमिति व्यवस्थितविकल्पाश्रयणादुपसर्गपूर्वस्य लभेर्नित्य नुमित्यर्थ। 'चिण्णमुलोरनुपसर्गस्य' इति वार्तिकाद्भाष्ये 'उपसर्गात् खल्घञोः' इत्यतः उपसर्गादिति 'न सुदुर्भ्याम्' इत्यतो नेति चानुवर्त्य उपसर्गात्परस्य लभेः 'विभाषा चिण्णमुलो' इति नेति व्याख्यातत्वाच्च। एतेन प्रपूर्वस्य लभेर्नित्य नुमिति व्याख्यान परास्तम्। 'लः कर्मणि' इति कर्मणि लकारा विहिताः। तथा 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि कृत्यादिप्रत्यया वक्ष्यन्ते। ते तावत् द्विकर्मकधातुषु कतरस्मिन् कर्मणि भवन्तीत्यत्र व्यवस्थामाह। **द्विकर्मकाणां त्विति**॥ कर्मप्रत्ययव्यवस्था वक्ष्यत इति शेषः। ता व्यवस्था सार्धश्लोकेन दर्शयति। **गौणे कर्मणीत्यादिना**॥ 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्' गौणे कर्मणि लादयो मता इत्यन्वय। 'अकथितञ्च' इति सूत्रेण यस्य कर्मसज्ञा तत् गौणङ्कर्मेति बोध्यम्। **प्रधाने इति**॥ नीहृकृष्वहां प्रधाने कर्मणि लादयो मता इत्यन्वयः। 'अकथितञ्च' इति सूत्रादन्येन यस्य कर्मसज्ञा तत्प्रधानङ्कर्मेति बोध्यम्। अथ 'गतिबुद्धि' इति सूत्रेण ये द्विकर्मकाः तेषु व्यवस्थामाह। **बुद्धीति**॥ बुद्ध्यर्थकस्य भक्षार्थकस्य शब्दकर्मकाणाञ्च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो मता इत्यन्वयः। इह 'गतिबुद्धि' इत्यनेन यस्य कर्मसज्ञा तत् गौण कर्म। तदितरत्तु प्रधानङ्कर्म। **प्रयोज्येति**॥ अन्येषा गत्यर्थाना अकर्मकाणा 'हृक्रो' इति सूत्रोपात्तहृक्रोश्च प्रयोज्यकर्मणि लादयो मता इत्यन्वयः। अय सार्धश्लोकः 'अकथितञ्च' इति सूत्रस्थवार्तिकभाष्यसङ्ग्रह इति बोध्यम्। **गौर्दुह्यते पयः इति**॥ गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः। तिङा अभिहितत्वात् गोः प्रथमा। प्रधानकर्मत्वात्पय इति द्वितीयान्तम्। तस्य तिङा अनभिहितत्वात्। बलिर्याच्यते वसुधाम्। अविनीतो विनयं याच्यते। तण्डुलाः ओदन पच्यन्ते। गर्गाः शत दण्ड्यन्ते। व्रजो रुध्यते गाम्। माणवकः पन्थान पृच्छ्यते। वृक्षोऽवचीयते फलानि। माणवको धर्म उच्यते। शिष्यते वा। शत जीयते देवदत्तः। सुधां क्षीरोदधिर्मथ्यते। देवदत्तश्शत मुष्यते। एतेषु गौणकर्मणि लकारः। अथ प्रधाने नीहृकृष्वहामित्यत्रोदाहरति। **अजा ग्रामं नीयते, ह्रियते, कृष्यते, उह्यते इति**॥ प्रतिक्रियमजा ग्राममित्यन्वेति। उह्यत इत्यत्र वहतेर्यजादित्वात्सम्प्रसारणम्। अत्र अजायाम्प्रधान-

ह्रियते । कृष्यते । उह्यते । बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा । भोज्यते माणवकमोदनः, माणवक ओदनं वा । देवदत्तो ग्रामं गम्यते । 'अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते' । मासो मासे वा आस्यते देवदत्तेन । णिजन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ।

इति भावकर्मतिङ्प्रकरणम् ।

---

कर्मणि लकारः । ग्रामस्यानभिहितत्वात् द्वितीया । बुद्ध्यर्थस्योदाहरति । **बोध्यते माणवकं धर्मः, माणवको धर्ममिति वेति** ॥ गुरुणेति शेषः । अत्र माणवके गौणकर्मणि धर्मे वा प्रधानकर्मणि ण्यन्तात् लकारः । भक्षार्थस्य तु अश्यन्ते देवाः अमृतं हरिणा, अश्यतेऽमृत देवानिति वा उदाहार्यम् । शब्दकर्मकस्य तु वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वेत्युदाहार्यम् । यदुक्तङ्गत्यर्थाना अकर्मकाणा हृक्रोर्श्चेत्येतेषा प्रयोज्यकर्मणि लकार इति । तत्र गत्यर्थस्योदाहरति । **देवदत्तो ग्रामं गम्यते इति** ॥ यज्ञदत्तेनेति शेषः । अत्र प्रयोज्यकर्मणि देवदत्ते गमेर्ण्यन्तात् ल । ननु अकर्मकाणा ण्यन्तानां प्रयोज्यकर्मण्येव लादय इति व्यवस्था व्यर्था । तत्र प्रयोज्य विना अन्यस्य कर्मणोऽभावादित्याशङ्क्य 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम्' इति वार्तिकेन अकर्मकधातूनामपि देशकालादिकर्मत्वेन ण्यन्ताना तेषां द्विकर्मकतया प्रयोज्यकर्मण्येव तत्र लादय इति व्यवस्था प्रयोजनवतीत्यभिप्रेत्य मासमास्यते माणवक इति ण्यन्ते प्रयोज्यकर्मणि माणवके एव लः, नतु मासे कर्मणि इत्युदाहरिष्यते । एवं तर्हि अण्यन्तेष्वकर्मकेषु मासमास्यते देवदत्तेनेति भावे लकारो न स्यात् । सकर्मकेभ्यः कर्मणि कर्तरि च ल इति नियमात् मास आस्यते देवदत्तेनेत्येव कर्मणि मासे लकारः स्यादित्याशङ्क्य आह । **अकर्मकाणामित्यादि** ॥ ये अकर्मकाः 'कर्तुरीप्सिततमङ्कर्म, तथायुक्तञ्चानीप्सितम्' इति सूत्रसिद्धकर्मरहिता 'आस उपवेशने, वृतु वर्तने' इत्यादयः, तेषां 'अकर्मकधातुभिर्योगे' इति वार्तिकसिद्धाकर्मकाणाङ्कर्मणि भावे च लकार इष्यते इत्यर्थः । नन्वेद वार्तिकमिति भ्रमितव्यम् । भाष्ये अदर्शनात् । किन्तु न्यायमूलकमेव । अकर्मकधातुभिर्योगे देशकालादीना कर्मसञ्ज्ञाविकल्पस्य भाष्याद्यभिमतत्वात् । यथा चैतत्तथा कारकाधिकारे 'अकर्मकधातुभिर्योगे' इति वचनव्याख्यावसरे अवोचाम । तदाह । **मासो मासे वा आस्यते देवदत्तेनेति** ॥ अत्र मासस्य कर्मत्वपक्षे कर्मलकार.। मासस्याभिहितत्वात् प्रथमा । मासस्य कर्मत्वाभावपक्षे तु भावे लकारः । मास इति सप्तमी । मासामिति त्वपपाठः । अथ प्रकृतमनुसरति । **णिजन्तात्त्विति** ॥ आसधातोः प्रकृतिसिद्धकर्मरहितत्वेन अकर्मकाण्णौ मासस्य कर्मत्वपक्षेऽपि प्रयोज्यकर्मण्येव लकार इत्यर्थः । **मासमास्यते माणवकः इति** ॥ ण्यन्तात्प्रयोज्यकर्मणि माणवके लः । मासस्यानभिहितत्वात् द्वितीया । हृक्रोस्तु हार्यते कार्यते वा भृत्यः कटं देवदत्तेन ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां भावकर्मप्रक्रिया समाप्ता ।

---

। श्रीरस्तु ।

# ॥ अथ कर्मकर्तृतिङ्प्रकरणम् ॥

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारका-
न्तराण्यपि कर्तृसंज्ञां लभन्ते । स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्वं करणत्वा-
दिसत्त्वेऽपि सम्प्रति कर्तृत्वात्कर्तरि लकारः । साध्वसिः छिनत्ति । काष्ठानि
पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक्सकर्मका अपि प्राये-

अथ कर्मकर्तृप्रक्रियान्निरूपयिष्यन् कर्मणः कर्तृत्वं साधयितुमाह । **यदेति** ॥ फल-
व्यापारयोर्धातुरिति सिद्धान्तः । पचिर्हि विक्लित्त्यनुकूलव्यापारे वर्तते । तत्र विक्लित्तिः फलम् ।
तदाश्रय ओदनः कर्म । तदनुकूलो व्यापारः अधिश्रयणादिः पुरुषप्रयत्नरूपो व्यापारः । तत्रा
धिश्रयणं चुल्या उपरि तण्डुलयुक्तस्थाल्याः । स्थापनं स्थित्यनुकूलव्यापारः । तत्र स्थितिः स्था-
लीतण्डुलनिष्ठा । तदनुकूलः पुरुषचेष्टाविशेषः । धातूपात्तव्यापाराश्रयः पुरुषः कर्ता । स्वतन्त्र-
त्वात् । स्वातन्त्र्यम्प्राधान्यमिति भाष्यम् । कर्मकरणादिकन्तु पुरुषप्रयत्नपरतन्त्रत्वान्न कर्तृत्वं
लभते इति स्थितिः । तत्र यदा सौकर्यातिशयविवक्षया कर्तुः पुरुषस्य व्यापारः प्रयत्नः न वि-
वक्ष्यते, किन्तु कर्मादिगत एव व्यापारः विक्लित्त्यादिफलानुकूलत्वेन विवक्ष्यते, तदा कर्मादि-
कारकाण्यपि कर्तृसंज्ञां लभन्ते इत्यर्थः । ननु कर्मादिगतव्यापारस्य पुरुषप्रयत्नाधीनत्वादस्व-
तन्त्रत्वात्कथङ्कर्मणः कर्तृत्वमित्यत आह । **स्वव्यापारे स्वतन्त्रत्वादिति** ॥ स्वातन्त्र्येण
विवक्षितत्वादित्यर्थः । तदुक्तं 'कर्मवत्कर्मणा' इत्यत्र भाष्ये । 'कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य
विवक्षितत्वात्' इति । अत्र कर्मग्रहणङ्करणादिकारकस्याप्युपलक्षणम् । **तेनेति** ॥ असिना छि-
नत्तीत्यादिप्रयोगदशायां असिकुठारादीनाङ्करणत्वादिसत्त्वेऽपि, असिः छिनत्ति इत्यादिप्रयोगदशा
याङ्कर्तृत्वेन विवक्षितत्वात् कर्तरि लकार इत्यर्थः । **साध्वसिः छिनत्तीति** ॥ अत्र करणस्य
कर्तृत्वविवक्षा। साधु इति क्रियाविशेषणम् । सौकर्यातिशयद्योतनाय अतितैक्ष्ण्यात् पुरुषप्रयत्नवि-
शेषमाघातातिशयं विना स्वयमेव असिः छिनत्तीत्यर्थः । **काष्ठानि पचन्तीति** ॥ अत्रापि
करणानाङ्कर्तृत्वविवक्षा । **स्थाली पचतीति** ॥ अत्राधिकरणस्य कर्तृत्वविवक्षा । काष्ठानाम-
तिशुष्कत्वात् धमनफूत्कारानपेक्षया स्थाल्या अतिलघुत्वादविलम्ब्य श्रपणतया सौकर्यम्बोध्यम् ।
**कर्मणस्त्विति** ॥ ये छिदिभिदिप्रभृतयः एककर्मकाः तत्र कर्मणः कर्तृत्वविवक्षायां वृक्षः छि-
नत्तीत्यादौ सकर्मकत्वेऽपि सम्प्रति कर्मणः कर्तृत्वविवक्षायामकर्मका एते इत्यर्थः । ये तु द्विकर्म-
काः तत्र एकस्य कर्मणः कर्तृत्वविवक्षायामपि इतरेण कर्मणा सकर्मकत्वसत्त्वात्प्रायेणेत्युक्तिः ।

णाकर्मकाः। तेभ्यो भावे कर्तरि च लकाराः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु।

## २७६६। कर्मवत्कर्मणा तुल्यक्रियः। (३-१-८७)

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्तुरभिहितत्वात्प्रथमा। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न। लकारवाच्य एव हि कर्ता कर्मवत्। 'लिङ्याशिष्यङ्'

---

ततश्च तेषु द्विकर्मकेषु कर्मणि कर्तरि च लकारः। तत्र कर्मणि लकारे यथा सुधा क्षीरसागरो मथ्यते। कर्तरि यथा सुधा क्षीरसागरो मथ्नाति। अथ यदुक्त एककर्मकेषु कर्मणः कर्तृत्वविवक्षायामकर्मकत्वमिति तस्य प्रयोजनमाह। **तेभ्यो भावे कर्तरि च लकाराः इति** ॥ नतु कर्मणि। असम्भवात्। अत एव अकर्मकेभ्यो भावे कर्तरि ल इत्युक्तमिति भावः। तत्र एककर्मकेभ्य कर्मण कर्तृत्वविवक्षाया भावे लकार उदाहरति। **पच्यते ओदनेनेति** ॥ आदनकर्तृक पाक इत्यर्थः। एव भिद्यते काष्ठेनेत्यपि। यद्यपि पचेर्द्विकर्मकत्वम्। तथापि तण्डुलानामविवक्षाया एककर्मकत्व पचेराश्रितम्। **कर्तरि त्विति** ॥ एककर्मकेषु कर्मण. कर्तृत्वविवक्षायाङ्कर्तरि लकारे विशेषो वक्ष्यते इत्यर्थः। **कर्मवत्कर्मणा** ॥ 'कर्तरि शप्' इत्यत. कर्तरीत्यनुवृत्त प्रथमया विपरिणम्यते। तुल्या क्रिया यस्य स. कर्ता तुल्यक्रियः। कर्मणेत्यनेन कर्मकारकस्था क्रिया विवक्षिता। क्रियाया. कर्मकारकेण तुल्यत्वस्य तत्स्थक्रियामादायैव उपपाद्यत्वात्। तदाह। **कर्मस्थयेत्यादिना** ॥ कर्मणः कर्तृत्वेन विवक्षाया कर्ता कर्मवदिति यावत्। वत्करणाभावे तु कर्मसञ्ज्ञक इत्यर्थशङ्का स्यात्। तथा सति सकर्मकत्वात् पच्यते ओदनेन भिद्यते काष्ठेनेति भावे लो न स्यात्। **कार्यातिदेशोऽयमिति** ॥ यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेद। तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वान्मुख्यत्वात् कार्यातिदेश एवाश्रयणीय इत्यर्थ.। **तेनेति** ॥ स्युरित्यत्रान्वेति। कर्मवत्त्ववचनेन कर्मकार्याणि 'सार्वधातुके यक्' इत्यत. यक्। 'भावकर्मणो' इत्यात्मनेपदम्। 'स्यसिच्सीयुट्तासिषु' इति चिण्वत्, तत्सन्नियोगशिष्ट इट् च स्युरित्यर्थ। कर्मण. कर्तृत्वविवक्षायाङ्कर्तरि विहितानि शास्त्राण्येव न स्युरिति भाव.। कर्तुरिति कर्मण कर्तृत्वविवक्षायाङ्कर्तरि लकारे सति तदादेशतिङा कर्तुरभिहितत्वादित्यर्थ.। **पच्यते ओदनः इति** ॥ फूत्कारादिपुरुषश्रमातिशयविशेष विना विक्लित्त्याश्रयो भवतीत्यर्थः। **भिद्यते काष्ठमिति** ॥ कुठारादिदृढाघातम्पुरुषश्रम विना द्विधा भवतीत्यर्थः। अत्र कर्मण· कर्तृत्वेऽपि कर्मत्वातिदेशाद्यक्। **अपाचि। अभेदीति** ॥ अत्र कर्मवत्त्वाच्चिण्। ननु कर्मण· कर्तृत्वविवक्षाया भावलकारे पच्यते ओदनेन, भिद्यते काष्ठेनेत्यत्र कर्मकर्तुस्तिङाऽनभिहितत्वात् द्वितीया स्यात्। कर्मवत्त्वातिदेशादित्याशङ्कते। **नन्विति** ॥ परिहरति। **नेति** ॥ नायमाक्षेप उन्मिषतीत्यर्थ·। कुत इत्यत आह। **लकारवाच्य एव हि कर्ता कर्मवदिति** ॥ तच्च कुत इत्यत आह।

(सू ३४३४) इति द्विलकारकात् 'लः' इत्यनुवृत्तेः भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति। किं तु भाव एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च। सैवेदानीं कर्तृस्था नतु तत्तुल्या। सत्यम्। कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। 'कर्मणा' इति किम्। करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किंच कर्तृस्थक्रियेभ्यो मा भूत्। गच्छति ग्रामः। आरोहति हस्ती। 'अधिगच्छति

---

**लिङ्याशिषीति** ॥ 'व्यत्ययो बहुलम्, लिङ्याशिष्यङ्' इति सहितया पाठे लकारात् पूर्व लकारान्तर 'हलो यमाम्' इति लुप्त प्रश्लिष्यते। ततश्च ल् ल् इति द्विलकारात् सूत्रात् ल इति षष्ठ्यन्त 'कर्मवत्कर्मणा' इत्यत्रानुवर्तते। तथाच लः कर्ता कर्मवदिति लभ्यते। वाच्यत्व षष्ठ्यर्थः। तथाच लकारवाच्यः कर्ता कर्मवदिति पर्यवस्यतीत्यर्थः। अस्त्वेवम्। प्रकृते किमायातमित्यत आह। **भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेरिति** ॥ तत्र भावस्यैव तद्वाच्यत्वादिति भाव.। **अत एवेति** ॥ लकारवाच्यस्यैव कर्मकर्तु कर्मवत्त्ववि धानादेव कृत्यक्तखलर्थाः प्रत्ययाः कर्मणि विहिताः कर्मकर्तरि न भवन्ति। तस्य लकारवाच्यत्वाभावेन कर्मवत्त्वस्य तत्राप्रवृत्तेरित्यर्थः। एतच्च भाष्ये स्पष्टम्। ननु 'सिनोतेर्ग्रासकर्मकर्तृकस्य' इति निष्ठानत्ववार्तिके सिनो ग्रासः स्वयमेवेति भाष्ये कथमुदाहृतम्। क्तप्रत्ययस्य कर्मकर्तर्यभावादिति चेत् उच्यते। अत एव भाष्यात् 'निष्ठा' इति सूत्रविहितकर्मार्थकक्तप्रत्ययस्यैव कर्मकर्तर्यभाव इति विज्ञायते। सिनो ग्रासः स्वयमेवेत्यत्र तु गत्यर्थाकर्मकेत्यादिना कर्तरि विहितः क्तप्रत्यय. कर्मकर्तरि भवत्येवेति शब्देन्दुशेखरे विस्तरः। **भेत्तव्यं कुसूलेनेति** ॥ पुरुषप्रयत्नमनपेक्ष्य कुसूलकर्तृका भिदिक्रियेत्यर्थः। शङ्कते। **नन्विति** ॥ **इदानीमिति** ॥ कर्मणः कर्तृत्वविवक्षादशायामित्यर्थः। **नतु तत्तुल्येति** ॥ तुल्यत्वस्य भेदघटितत्वादिति भावः। अर्धाङ्गीकारेण परिहरति। **सत्यमिति** ॥ विक्लित्तिर्द्विधाभवनञ्च कर्मस्थमेव सम्प्रति कर्तृस्थमिति युक्तम्। अथापि तयोस्तुल्यत्वाभावस्तु नेत्यर्थः। **कर्मत्वेति** ॥ कर्मत्वकर्तृत्वे ये अवस्थे धर्मविशेषौ तयोर्भेदः स एव उपाधिः निमित्त यस्य तथाविध तत्समानाधिकरण कर्मत्वकर्तृत्वसमानाधिकरण क्रियाभेद आश्रित्य तुल्यव्यवहार इत्यर्थः। वास्तवभेदाभावेऽपि औपाधिकभेदात्कर्मस्थक्रियातुल्य.क्रियत्वङ्कर्मकर्तुरिति भावः। **करणाधिकरणाभ्यामिति** ॥ असिना छिनत्ति स्थाल्या पचतीत्यत्र करणाधिकरणयोर्यो व्यापारः स एव असिश्छिनत्ति स्थाली पचतीत्यत्र कर्तृस्थ इति तत्रापि कर्मवत्त्व स्यात्। तन्निवृत्त्यर्थङ्कर्मणेति पदमित्यर्थ.। ननु 'कर्मवत्कर्मणा' इत्यत्र 'धातोरेकाचः' इत्यतो धातोरित्यनुवर्तते। धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थ.। करणत्वाद्यवस्थायां वस्तुतस्सन्नपि असिस्थाल्योर्व्यापारो न धातूपात्त इति नोक्तदोष इत्यस्वरसादाह। **किञ्चेति** ॥ **गच्छति ग्रामः इति** ॥ मार्गस्य अविषमनिष्कण्टकतया प्रत्यासन्नतया च श्रम विना प्राप्त्याश्रयो भवतीत्यर्थः। **आरोहति हस्तीति** ॥ अङ्कुशाघातादिहस्तिपक-

शास्त्रार्थः, स्मरति, श्रद्दधाति वा ।' यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया । नेतरत्र । न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते । करोतिरुत्पादनार्थः । उत्पत्तिश्च कर्मस्था । तेन करिष्यते घट इत्यादि । यत्नार्थत्वे तु नैतत्सिद्ध्येत् । ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् । एतेनानुव्यवस्यमानेऽर्थे इति व्याख्यातम् । कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओलोपे च रूपसिद्धेः ।

---

व्यापार विना स्वयमेव न्यग्भवन् आरोहणाश्रयो भवतीत्यर्थः । '**अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति वेति**॥' पूर्वार्धमिदम् । 'यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा' इत्युत्तरार्धम् । गुरुकृपालेशादेव श्रम विना स्वयमेव शास्त्रार्थ अधिगच्छति निश्चयविषयो भवति स्मृतिविषयो भवति श्रद्धाविषयो भवतीत्यर्थः । अत्र कर्मकर्तुः ग्रामादेः कर्तृस्थक्रियावत्त्वेन कर्मस्थक्रियावत्त्वाभावात् न कर्मवत्त्वम् । अत न कर्मकार्य यगादि । किन्तु कर्तृकार्य शबाद्येवेति भाव. । ननु कर्मकर्तु' ग्रामादे' प्राप्त्याद्याश्रयत्वेन कर्मस्थक्रियत्वमस्त्येवेत्यत आह । **यत्रेति** ॥ यत्र कियाकृत. विशेष वैलक्षण्य दृश्यते प्रत्यक्षमुपलभ्यते तत्र कर्मणि विद्यमाना क्रिया कर्मस्थक्रियेत्युच्यते इत्यन्वयः । तदुदाहृत्य दर्शयति । **यथा पक्वेषु तण्डुलेष्विति** ॥ तण्डुलावस्थापेक्षया विक्लित्तिकृतो विशेषो दृश्यते इति शेषः । अन्यत्रापि क्रियाकृत वैलक्षण्यमुदाहृत्य दर्शयति । **यथा वा छिन्नेषु काष्ठेष्विति** ॥ अछिन्नापेक्षया वैलक्षण्य दृश्यते इति शेष' । गच्छति ग्राम इत्यादौ तु नैवमित्याह । **नहीति** ॥ **ग्रामेष्विति** ॥ उपलक्षणमिदम् । पक्वापक्वतण्डुलेषु यथा क्रियाकृत वैलक्षण्यमुपलभ्यते तथा गतागतग्रामे आरूढानारूढहस्तिनि अधिगतानधिगते स्मृतास्मृते श्रद्धिताश्रद्धिते च शास्त्रार्थे क्रियाकृतवैलक्षण्यन्न दृश्यते इत्यर्थः । ग्रामगमनादौ कर्तर्येव श्रमादिवैलक्षण्यदर्शनादिति भावः । ननु ज्ञानेच्छयोरिव यत्नस्यापि कर्तृस्थत्वात् तद्वाचिनः कृञोऽपि कर्ता न कर्मवत्स्यात् । ततश्च क्रियते घट' स्वयमेवेति यगादिः न सिध्येदित्याशङ्क्य कृञो न यत्नार्थत्वमित्याह । **करोतिरुत्पादनार्थः इति** ॥ उत्पत्त्यनुकूलव्यापारार्थक इत्यर्थः । एतच्च भूवादिसूत्रे भाष्ये स्पष्टम् । करोतेरुत्पादनार्थकत्वे तु कर्मस्थक्रियत्वन्तत्कर्तुरुपपादयति । **उत्पत्तिश्च कर्मस्थेति** ॥ उत्पन्ने अनुत्पन्ने च वैलक्षण्यस्य प्रत्यक्षत्वादिति भावः । **तेनेति** ॥ कृञ. कर्तु कर्मस्थक्रियत्वेनेत्यर्थः । तथाच क्रियते घटः स्वयमेवेत्यत्र यक् । तासि तु चिण्वदिट्पक्षे कारिता, तदभावे तु कर्ता इति सिद्धवत्कृत्य आह । **करिष्यते घट इत्यादीति** ॥ चिण्वदिट्पक्षे कारिष्यते इति रूपम् । तदाभावपक्षे तु 'ऋद्धनोः स्ये' इति इट् । करिष्यते । सीयुटश्चिण्वदिटि कारिषीष्ट । तदभावे तु कृषीष्ट । लुङि अकारिष्ट–अकृत । **नैतदिति** ॥ कर्मवत्वन्न सिध्येदित्यर्थ. । यतते इतिवत्सकर्मकत्वमेव न स्यादित्यपि बोध्यम् । **एतेनेति** ॥ ज्ञानस्य कर्तृस्थत्वव्युत्पादनेनेत्यर्थ. । **अनुव्यवस्यमानेऽर्थे इति** ॥ अर्थे स्वयमेव निश्चयविषयता सम्पद्यमाने इत्यर्थः । **व्याख्यातमिति** ॥ समर्थितमित्यर्थः । कथ समर्थितमित्यत आह । **कर्तृस्थत्वेन यगभावादिति** ॥ अनुव्यवसायः निश्चयः तत्र

ताच्छील्यादावयं चानश् न त्वात्मनेपदम्। 'सकर्मकाणां प्रतिषेधो वक्तव्यः' (वा १८७३)। अन्योन्यं स्पृशतः। अजा ग्रामं नयति। दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम' (वा १८७६)।

## २७६७। न दुहस्नुनमां यक्चिणौ। (३-१-८९)

---

कर्मकर्ता अर्थः सः न कर्मस्थक्रियः। अर्थे अनुव्यवसायकृतवैलक्षण्याभावात्। किन्तु कर्तृस्थक्रिय एव। अनुव्यवसायकर्तरि देवदत्ते हर्षादिदर्शनात्। ततश्च कर्मवत्त्वाभावान्न यक्। यकि तु कित्त्वात् 'घुमास्थागापाजहातिसाम्' इति ईत्त्वे अनुव्यवसीयमान इति स्यादित्यर्थः। ननु यगभावे कथं यकारश्रवणमित्यत आह। **श्यनीति** ॥ 'षो अन्तकर्मणि' इति धातोरनुव्यवपूर्वादुपसर्गवशेन निश्चयवृत्तेर्लट आनादेशे कृते श्यनि 'ओत श्यनि' इत्योकारलोपे अनुव्यवस्यमान इति रूपसिद्धेरित्यर्थः। ननु कर्मवत्त्वाभावे 'भावकर्मणोः' इत्यात्मनेपदाभावात् कथमिह लटश्शानच्। तस्यात्मनेपदत्वादित्यत आह। **ताच्छील्यादाविति** ॥ 'ताच्छील्यवयोवचनशक्तिषु चानश्' इत्यनेन चानाशित्यर्थः। तस्य च लादेशत्वाभावेन आत्मनेपदत्वाभावात् कर्मवत्त्वाभवेऽपि कर्मकर्तरि प्रवृत्तिर्निर्बाधा। तदाह। **न त्वात्मनेपदमिति** ॥ ननु अन्योन्य स्पृशत स्वयमेव यज्ञदत्तदेवदत्तावित्यत्रापि कर्मवत्त्वाद्यगादि स्यात्। तत्र हि स्पृशिस्सयोगानुकूलव्यापारार्थक। उभावपि कर्तारौ कर्मभूतौ च। स्पर्शनक्रियाया एकत्वेऽपि आश्रयभेदात्तद्भेदमाश्रित्य यज्ञदत्तनिष्ठा स्पर्शनक्रियां प्रति देवदत्तस्य कर्मत्वम्। एवं देवदत्तनिष्ठामपि स्पर्शनाक्रिया प्रति यज्ञदत्तस्य कर्मत्वम्। एवङ्कर्तृत्वमप्युभयोर्ज्ञेयम्। एवञ्च उभयो कर्तृत्वकर्मत्वसत्वादेकस्मिन् कर्तरि कर्मणि वा या स्पृशिक्रिया सैवेतरस्मिन् कर्तरि कर्मणि वा वर्तते इति कर्मवत्त्व स्यात्। आश्रयनिबन्धनं भेदमाश्रित्य तुल्यक्रियत्वोपपत्ते.। स्पृष्टास्पृष्टयोरन्योन्यसंयोगकृतहर्षादितदभावदर्शनाच्चेत्यत आह। **सकर्मकाणां प्रतिषेधः इति** ॥ एककर्मकाणां छिदिभिदिप्रभृतीना कर्मणः कर्तृत्वविवक्षया अकर्मकाणां कर्तुः कर्मवत्त्वमुक्तम्। ये तु द्विकर्मकाः कर्मणः कर्तृत्वविवक्षायामपि सकर्मका धातव. तेषा धातूना कर्मकर्तुः कर्मवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। **अन्योन्यं स्पृशतः इति** ॥ कर्मवत्त्वे तु यकि तङि च स्पृश्येते इति स्यादिति भावः। 'सकर्मकाणां प्रतिषेधः' इत्यस्य उदाहरणान्तरमाह। **अजा ग्रामं नयतीति** ॥ अजा ग्राम स्वयमेव प्राप्नोतीत्यर्थः। अत्र नयन प्रत्यजायाः कर्मणः कर्तृत्वविवक्षायामपि ग्राममादाय सकर्मकत्वान्न कर्मवत्त्वमिति भावः। वस्तुतस्तु गते अगते च ग्रामे वैलक्षण्याभावादेवात्र कर्मवत्त्वस्याप्राप्तिरिति नेदमस्य वार्तिकस्योदाहरणम्। अत एव भाष्ये अन्योन्यमाश्लिष्यतः, अन्योन्य स्पृशतः, अन्योन्यं सगृह्णीतः, इत्येवोदाहृतमिति शब्देन्दुशेखरे स्पष्टम्। **दुहिपच्योरिति** ॥ कर्मवत्त्वमिति शेषः। अनयोर्द्विकर्मकत्वादेकस्य कर्मणः कर्तृत्वविवक्षायामपि अन्यकर्मणा सकर्मकत्वात्पूर्ववार्तिकेन कर्मवत्त्वनिषेधे प्राप्ते प्रतिप्रसवोऽयम्। **न दुह** ॥ दुह स्नु नम् एषान्द्वन्द्वः। **कर्मकर्तरीति** ॥ एतत्तु नानुवृत्तिलभ्यम्। पूर्वत्रानुपलम्भात्। किन्तु 'कर्मवत्कर्मणा तुल्यक्रियः' इति समभिव्या-

एषां कर्मकर्तरि यक्चिणौ न स्तः । दुहेरनेन यक एव निषेधः । चिण्तु विकल्पिष्यते । शप्, लुक् । गौः पयो दुग्धे ।

## २७६८ । अचः कर्मकर्तरि । (३-१-६२)

अजन्ताच्च्लेश्चिण्वा स्यात्कर्मकर्तरि तशब्दे परे । अकारि—अकृत ।

## २७६९ । दुहश्च । (३-१-६३)

अदोहि । पक्षे क्सः । 'लुग्वा—' (सू ३६५) इति पक्षे लुक् । अदुग्ध—अधुक्षत । उदुम्बरः फलं पच्यते । 'सृजियुज्योः श्यंस्तु' (वा १८७७)

---

हारलभ्यमेव । 'अचः कर्मकर्तरि' इत्यतो मण्डूकप्लुत्या तदनुवृत्तिर्वा । **दुहेरनेनेति** ॥ 'न दुहस्नुनमाम्' इत्यनेन दुहेः कर्मकर्तरि यक एव निषेध. । चिण्तु 'दुहश्च' इति वक्ष्यमाणसूत्रेण विकल्पितो वक्ष्यते इत्यर्थः । कर्मकर्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः । चिण्तु विकल्पेनेष्यते इति क्वचित्पाठः । दुग्धे इत्यत्र प्रक्रिया दर्शयति । **शप् लुगिति** ॥ दुहेः कर्मकर्तरि यकि निषिद्धे शप् प्रवर्तते। तस्य 'अदिप्रभृतिभ्य' इति लुगित्यर्थः। **गौः पयो दुग्धे इति** ॥ गौः स्वयमेव पय उत्सृजतीत्यर्थः । कर्मकर्तृभूताया गवि लट् । स्वरितेत्त्वेऽपि भावकर्मणो' इत्यात्मनेपदमेव । 'न दुह' इति न यक्। गा पयो दुग्धे इति तु नोदाहृतम् । 'गौणे कर्मणि दुह्यादेर्लादयो मता.' इत्युक्ते.। **अच कर्मकर्तरि** ॥ 'च्लेस्सिच्' इत्यतः च्लेरिति 'चिण् ते पदः' इत्यतः चिण्ते इति, दीपजन इत्यत' अन्यतरस्यामिति, चानुवर्तते। 'धातोरेकाचः' इत्यतो अनुवृत्तस्य धातुग्रहणस्य अचा विशेषितत्वात्तदन्तविधि । तदाह। **अजन्तादित्यादिना ॥ अकारीति ॥** कटं स्वयमेवेति शेषः । कर्मकर्तरि लुङ् । च्लेश्चिण्। वृद्धिः। रपरत्वम। 'चिणो लुक्' इति तशब्दस्य लुक् । **अकृतेति ॥** चिणभावपक्षे 'ह्रस्वादङ्गात्' इति सिचो लोप । **दुहश्च ॥** अच इति वर्जं पूर्वसूत्रं तत्रानुवृत्त, तत्सर्वमिहानुवर्तते। कर्मकर्तरि तशब्दे परे दुहेश्चिण्वा स्यादित्यर्थः । स्पष्ट इति न व्याख्यातम् । अनुवृत्तिसौकर्यार्थमेव पूर्वसूत्र प्रकृतदुहधातावनुपयुक्तमप्युपन्यस्तम् । **अदोहीति** ॥ दुहेः कर्मकर्तरि लुङ् । स्वयमेव गौः पय इति शेष. । चिण्पक्षे लघूपधगुणः । चिणभावपक्षे आह । **पक्षे क्सः इति** ॥ 'शल इगुपधात्' इत्यनेनेति भावः। **लुग्वेति** ॥ 'लुग्वादुहदिहलिहगुहाम्' इति क्सस्य पाक्षिको लुगित्यर्थः । अत्र दुहिपच्योरित्यत्र पचेरुदाहरति । **उदुम्बरः फलं पच्यते इति** ॥ उदुम्बरवृक्ष फल पचति कालविशेषः इत्यत्र द्विकर्मकः पाचिः । इह तु इदुम्बरो वृक्ष' स्वयमेव कालविशेषमनपेक्ष्य फल पक्वाश्रय करोतीत्यर्थ' । अत्र उदुम्बरस्य गौणकर्मण. कर्तृत्वेन विवक्षायां फलेन प्रधानकर्मणा सकर्मकत्वात् 'सकर्मकाणां प्रतिषेधः' इति कर्मवत्त्वस्य प्रतिषेधे प्राप्ते 'दुहिपच्योः' इति कर्मवत्त्वस्य प्रतिप्रसवाद्यगादिकामिति भाव. । वस्तुतस्तु भाष्ये द्विकर्मकेषु पचेरपरिगणनान्न द्विकर्मकत्वामिति कारकाधिकारे प्रपञ्चितमस्माभिः । तथाच कर्मकर्तरि उदुम्बरः फलं पच्यते इत्यत्र फलस्यैव कर्मतया तस्य कर्तृत्वविवक्षायां पचेरकर्मकत्वात् 'सकर्मकाणाम्' इति प्रतिषेधस्याप्रसक्तेः

अनयोः सकर्मकयोः कर्ता बहुलं कर्मवद्यगपवादश्च श्यन्वाच्य इत्यर्थः। 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्' (वा ५०५४) सृज्यते स्रजं भक्तः। श्रद्धया निष्पादयतीत्यर्थः। असर्जि। युज्यते ब्रह्मचारी योगम्। 'भूषाकर्मकिरादिसनां

---

प्रतिप्रसवविधिरयं व्यर्थ इति यद्यपि। तथाप्यत्र मते उदुम्बरः फल पचतीत्यत्र कर्तृलकारे पचेः कर्तृस्थक्रियत्वात् कर्मस्थक्रियत्वाभावादुदुम्बर. फल पच्यत इति कर्मकर्तरि 'कर्मवत्कर्मणा' इति कर्मवत्त्वस्याप्राप्तौ 'दुहिपच्यो.' इति कर्मवत्त्वस्य बहुल पचेरपूर्वविधिरित्यन्यत्र विस्तरः। 'सृजि-युज्योश्श्यस्तु' इति वार्तिकम्। अनयोः सकर्मकयो' इत्यादि तद्भाष्यम्। अत्र सृजियुज्योर्दैवादिकयोर्न ग्रहणम्। तयोरकर्मकताया उक्तत्वात्। किन्तु 'सृज विसर्गे' इति तौदादिकस्य 'युजियोगे' इति रौधादिकस्य च ग्रहणम्। तत्र विसर्ग उत्पादनम्। यथा प्रजास्सृजतीति। योगस्सयोजनम्। यथा अश्व युनक्तीति। रथादिना सयोजयतीति गम्यते। **सृजेः श्रद्धोपपन्ने इति**॥ श्रद्धायुक्ते मुख्यकर्तर्येव उक्तो विधिरित्यर्थ। तत्र मुख्यकर्तरि अत्यन्ताप्राप्त कर्मवत्त्वमिह बहुल विधीयते। 'युजेस्तु कर्मकर्तर्येव उक्तविधिः' इति भाष्यात्तत्रापि कर्मणि क्रियाकृतवैलक्षण्या-भावादप्राप्त कर्मवत्त्वमिह बहुल विधीयते। कर्मवत्त्वे सति यकि प्राप्ते तदपवादश्श्यन्विधीयते। तेन 'ञ्णित्यादिर्नित्यम्' इत्याद्युदात्तत्व सिद्ध्यति। यकि तु 'तास्यनुदात्तेत्' इत्यादिना लसार्वधातु-कानुदात्तत्वे प्रत्ययस्वरेण यक उदात्तत्व स्यात्। **सृज्यते स्रजं भक्तः इति**॥ अत्र मुख्यक-र्तरि लकारः। कर्मवत्त्वादात्मनेपदम्। यगपवादश्श्यन्। **श्रद्धया निष्पादयतीत्यर्थः इति**॥ धातूनामनेकार्थत्वादिति भाव। सृज्यते स्रज भक्त इत्यत्र यदा तु निष्पादयतीत्येवार्थ', ननु श्रद्धयेति तदा सृजति स्रजमित्येव भवति। अथ युजेरुदाहरति। **युज्यते ब्रह्मचारी योगमिति**॥ अत्र कर्मकर्तरि यगपवादः श्यन्निति भाष्यम्। योगश्चित्तवृत्तिनिरोध. योगशा-स्त्रप्रसिद्धः। ब्रह्मचर्यं स्त्रीसङ्गराहित्यम्। 'तद्योगाङ्गम्' इति च योगशास्त्रप्रसिद्धम्। सः योगः ब्रह्मचारिण युनक्ति। आत्मदर्शनेन सयोजयतीति कर्तृलकारे सयोजनक्रियाया योगो मुख्यकर्ता। ब्रह्मचारी तु कर्मेति स्थिति। तत्र कर्मणो ब्रह्मचारिण कर्तृत्वविवक्षायां युज्यते ब्रह्मचारी यो-गमिति कर्मकर्तरि ब्रह्मचारिणि लकार. कर्मवत्त्वम्। स्वरितेत्त्वेऽपि कर्मवत्त्वात्तदेव यगपवादः श्यन्। ब्रह्मचारी प्राणायामाभ्यासादिश्रमबाहुल्य विना स्वयमेव योगेन सबध्यते इत्यर्थ'। तत्र ब्रह्मचारिणि कर्मकर्तरि धात्वर्थसम्बन्धः अनुयोगितया वर्तते। योगे तु प्रतियोगितया वर्तत इति स्थितिः। तत्र यद्यपि प्रतियोगिनो योगात् 'सहयुक्तेऽप्रधाने' इति तृतीया भवितव्या। तथापि युजेः प्रतियोगित्वावच्छिन्नसम्बन्धोऽर्थः। तत्र प्रतियोगित्व फल, सम्बन्धो व्यापारः। प्रतियोगित्वरूपफलाश्रयत्वात् द्वितीयेति समाहित शब्देन्दुशेखरे। अत्र भाष्ये प्रयोगादेव योगात् द्वितीयेत्यन्ये। भूषाकर्मेति वार्तिकम्। भूषाकर्म किरादि सन् एषा द्वन्द्वः। अन्यत्रेति स्वार्थे त्रल्। आत्मनेपदात् अन्यत्कर्मकार्यमिति लभ्यते। भूषा कर्म क्रिया येषा

---

१. अत्र च 'सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यश्चिणात्मनेपदार्थः' इति भाष्यं मानम्।

चान्यत्रात्मनेपदात्' (वा १८८०) भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः। अलंकुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। गिरते। अगीर्ष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यन्तर्गणः। चिकीर्षते कटः। अचिकीर्षिष्ट। इच्छायाः कर्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियात्वम्।

## २७७०। न रुधः। (३-१-६४)

अस्माच्च्लेश्चिण्न। अवारुद्ध गौः। कर्मकर्तरीत्येव। अवारोधि गौर्गोपेन।

## २७७१। तपस्तपःकर्मकस्यैव। (३-१-८८)

---

वाच्यतया ते भूषाकर्माण धातवः। भूषणक्रियावाचिनामिति यावत्। तदाह। **भूषावाचिनामित्यादिना** ॥ **अलंकुरुते कन्येति** ॥ स्वयमेव अन्यप्रयत्न विना भूषणक्रियावतीत्यर्थः। अत्र भूषार्थकत्वात् कर्मकर्तरि तङेव नतु यक्। **अलमकृतेति** ॥ अत्र तङेव नतु चिण्। लुटि तु अलङ्कर्तेत्येव। नतु चिण्वदिटौ। **अवकिरते हस्तीति** ॥ हस्तिनमवकिरति कुसुमादिरित्यत्र मुख्यकर्तरि लकार। तत्र हस्ती कर्म। तस्य कर्तृत्वविवक्षाया स्वयमेव पुरुषप्रयत्न विना वृक्षादिसमीप गच्छन् पुष्पादिभिः अवकिरणवान् भवतीत्यर्थः। अत्रापि तङेव, नतु यगादि। **अवाकीर्ष्टेति** ॥ 'लिङ्सिचोरात्मनेपदेषु' इति वेट्। **गिरते इति** ॥ ओदन स्वयमेवेति शेष। 'गॄ निगरणे' अयङ्किरादि। **आद्रियते इति** ॥ 'दृङ् आदरणे' अयमपि किरादि। शप्रत्यये 'रिङ् शयग्लिङ्क्षु' इति रिङ्। आतिथिमाद्रियते इति मुख्यकर्तरि आद्रियतेऽतिथिरिति कर्मकर्तरि स्वयमेव आदरणाश्रय इत्यर्थ। अत्र यद्यपि शे यकि च न विशेषः। तथापि न्याय्यश्श एव। यको निषिद्धत्वात्। स्वरे वा विशेषः। तङि तु ङित्त्वादेव सिद्धः। अतिथेरभिहितत्वात् प्रथमेति विशेषः। **आदृतेति** ॥ चिणोऽनेन निषेधे 'ह्रस्वादङ्गात्' इति सिचो लोपः। 'उश्च' इति कित्त्वम्। अथ सन्नन्तस्योदाहरति। **चिकीर्षते कटः इति** ॥ स्वयमेव कर्तुमिच्छाविषय इत्यर्थ। नन्विच्छायाः पुरुषरूपकर्तृनिष्ठत्वात् कटरूपकर्मनिष्ठत्वाभावात् इच्छाया सत्यां असत्याञ्च कटे कर्मणि वैलक्षण्यादर्शनाच्च कर्मस्थक्रियत्वाभावादिह कर्मवत्त्वस्याप्रसक्तेस्तन्निषेधो व्यर्थ इत्यत आह। **इच्छायाः इति** ॥ **न रुधः** ॥ 'च्लेस्सिच्' इत्यत. च्लेरिति 'चिण्ते पदः' इत्यतश्चिणिति चानुवर्तते। तदाह। **अस्माच्च्लेश्चिण् नेति** ॥ **अवारुद्ध गौरिति** ॥ स्वयमेवेति शेषः। **कर्मकर्तरीत्येवेति** ॥ 'अचः कर्मकर्तरि' इत्यतस्तदनुवृत्तेरिति भाव.। **अवारोधि गौर्गोपेनेति** ॥ इह गो. कर्मणः कर्तृत्वविवक्षाया अभावान्न चिण्निषेध इति भावः। **तपस्तपःकर्मकस्यैव** ॥ आद्य तपः इति षष्ठ्यन्तम्। तपःकर्मकस्यैव तपधातोरिति लभ्यते। 'कर्तरि शप्' इत्यतः कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते। 'कर्मवत्कर्मणा' इत्यतः कर्मवदित्यनुवर्तते, इति मत्वा

कर्ता कर्मवत्स्यात् । विध्यर्थमिदम् । एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिणः । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । 'तपोऽनुतापे च' (सू २७६०) इति चिण्निषेधात्सिच् । अतप्त । 'तपःकर्मकस्य' इति किम् । उत्तपति सुवर्णं सुवर्णकारः । 'न दुहस्नुनमां यक्चिणौ' (सू २७६७) । प्रस्नुते । प्रास्नाविष्ट—प्रास्नोष्ट । नमते दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र

सूत्रशेष पूरयति । **कर्ता कर्मवदिति** ॥ **विध्यर्थमिदमिति** ॥ एतच्चानुपदमेव उदाहरणव्याख्यावसरे स्पष्टीभविष्यति । ननु विध्यर्थत्वे एवकारो व्यर्थ इत्यत आह । **एवकारस्त्वति** ॥ **तप्यते तपस्तापसः इति** ॥ अत्र तपिरार्जनार्थक इत्याह । **अर्जयतीत्यर्थः इति** ॥ प्राजापत्यचान्द्रायणादिकृच्छ्राद्यात्मकतपस्सम्पादयतीत्यर्थः । मुख्यकर्तरि लः सम्पादनस्य तापसात्मककर्तृस्थत्वात् तपोरूपकर्मस्थत्वाभावात् 'कर्मवत्कर्मणा' इत्यप्राप्तङ्कर्मवत्त्वमनेन सूत्रेण विधीयते । तेन यगात्मनेपदादि । यदा तु तदपि दुःखजननात्मके सन्तापे वर्तते तदा तापस तपस्तपतीत्येव भवति । दुःखयतीत्यर्थ । अत्र मुख्यकर्तृ तपः । तापसस्तु तपःकर्म । अत्रापि दुःखजननव्यापारस्य तपोरूपकर्तृस्थतया तापसरूपकर्मस्थत्वाभावात् 'कर्मवत्कर्मणा' इत्यनेन कर्मवत्त्व न भवति । तप कर्मकत्वाभावादनेनापि न कर्मवत्त्वम् । अतो न यगादिकर्मकार्यम् । अथ लुङि अतप्तेत्यत्र कर्मवत्त्वाच्चिणमाशङ्क्य आह । **तपोऽनुतापे च इति** ॥ **चिण्निषेधात् सिजिति** ॥ तस्य 'झलो झलि' इति लोपे परिनिष्ठितमाह । **अतप्तेति** । **उत्तपति सुवर्णं सुवर्णकारः इति** ॥ अत्र तप कर्मकत्वाभावान्न कर्मवत्त्वमिति भाव. । भाष्ये तु एवकारादिद सूत्र नियमार्थमित्युक्तमिति शब्देन्दुशेखरे प्रपञ्चितमेतत् । वृत्त्यनुसारिण इत्यनेन भाष्यविरोधस्सूचित इत्यलम् । 'दुहिपच्योर्बहुळम्' इति कर्मवत्त्वविधिस्थदुहिप्रसङ्गात् 'न दुहस्नुनमाम्' इति सूत्रमुपन्यस्त प्राक् । इदानीं सिंहावलोकनन्यायेन स्नुनमोरुदाहर्तुं पुनस्सूत्रमुपन्यस्यति । **न दुहस्नुनमां यक्चिणाविति** ॥ तत्र स्नुधातोरुदाहरति । **प्रस्नुते इति** ॥ स्नुधातुः क्षीरप्रस्रवणविषयोत्कण्ठीकरणे वर्तते । वत्सो गा प्रस्नौतीति मुख्यकर्तरि लकारे वत्सो गा क्षीरप्रस्रवणविषये उत्कण्ठयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र स्नुधातुः । अत्र गौः कर्म । उत्कण्ठनव्यापारस्तु कर्तृभूतवत्सनिष्ठः । उत्कण्ठा तु गोरूपकर्मनिष्ठा । गोः कर्मणः कर्तृत्वविवक्षायान्तु प्रस्नुते गौ । स्वयमेव क्षीरप्रस्रवणविषये उत्कण्ठावतीत्यर्थः । तत्र उत्कण्ठा पूर्वं कर्मगता । सम्प्रति तु कर्तृगता । उत्कण्ठाकृतञ्च वैलक्षण्य प्रस्रवण दृश्यत एव । ततश्च कर्मस्थक्रियत्वात् कर्मवत्त्वे यकि प्राप्ते अनेन निषेधः । **प्रास्नाविष्टेति** ॥ अत्र कर्मवत्त्वात् प्राप्तश्चिण् न । किन्तु चिण्वदिटौ पक्षे स्तः । चिण्वदिडभावे तु 'स्नुक्रमोः' इति नियमाद्वलादिलक्षण इण्न । तदाह । **प्रास्नोष्टेति** ॥ णम उदाहरति । **नमते दण्डः इति** ॥ नमति दण्ड कश्चित् । नमयतीत्यर्थ. । कर्मणः कर्तृत्वविवक्षायान्तु नमते दण्ड. । अत्र कर्मवत्त्वेऽपि न यक् । **अनंस्तेति** ॥ अत्र कर्मवत्त्वेऽपि न चिण् । ननु णमधातोः प्रह्वीभावार्थकस्याकर्मकत्वात् कर्मवत्त्वाप्रसक्तेर्यक्चिणोर्न प्रसक्तिरित्यत आह । **अन्त-**

नमिः । यक्चिणोः प्रतिषेधे 'हेतुमण्णिश्रिब्रूञामुपसंख्यानम्' (वा १८८१) । कारयते । अचीकरत । उच्छ्रयते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव । कारिष्यते । उच्छ्रायिष्यते । ब्रूते कथा । अवोचत । भारद्वाजीयाः पठन्ति । 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्' (वा १८८२) । पुच्छमुदस्यति उत्पुच्छयते गौः । अन्तर्भावितण्यर्थतायाम् उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायाम् उत्पुच्छयते गौः । उदपुपुच्छत । यक्चिणोः प्रति-

---

**भावितण्यर्थोऽत्र नमिरिति** ॥ धातूनामनेकार्थकत्वादिति भावः । **यक्चिणोरिति** ॥ 'न दुहस्नुनमाम्' इति यक्चिणो प्रतिषेधसूत्रे दुहस्नुनमा हेतुमण्णिश्रिब्रूञामिति च वाच्यमित्यर्थः । **कारयते इति** ॥ स्वय देवदत्त इति शेष । करोति देवदत्त', त प्रेरयति यज्ञदत्त इति ण्यन्तान्मुख्यकर्तरि लकारः । अत्र ण्यन्तकर्मणो देवदत्तस्य यज्ञदत्तप्रेरणमनपेक्ष्य कर्तृत्वविवक्षायाङ्कर्मकर्तरि लकार । कर्मवत्त्वेऽपि तङेव, न यगिति भाव । **अचीकरतेति** ॥ अत्र कर्मवत्त्वेऽपि न चिण् 'णिश्रि' इति चङेव । **उच्छ्रयते दण्डः इति** ॥ स्वयमेवेति शेष. । दण्डमुच्छ्रयति कश्चिदित्यर्थ' । मुख्यकर्तरि लकार. । तत्र कर्मणो दण्डस्य कर्तृव्यापारमनपेक्ष्य कर्तृत्वविवक्षायाङ्कर्मकर्तरि लकार. । कर्मवत्त्वेऽपि न यक् तङेव । **उदशिश्रियतेति** ॥ कर्मवत्त्वेऽपि चिणभावात् 'णिश्रि' इति चङ । ननु कारिष्यते इत्यत्र कथञ्चिण्वदिटौ । ण्यन्तस्याजन्तस्य उपदेशाभावादित्यत आह । **चिण्वदिट् तु स्यादेवेति** ॥ 'स्यसिच्सीयुट्तासिषु' इत्यत्र हि उपदेशे अजन्तस्येति नार्थ । किन्तु उपदेशे योऽच् तदन्तस्येत्यर्थः । तथाच णिजन्तस्योपदेशाभावेऽपि णेरुपदेशसत्त्वान्न दोष इति भाव' । **उच्छ्रायिष्यते इति** ॥ श्रिञः उपदेशे योऽच् तदन्तत्वाच्चिण्वदिटौ । **ब्रूते कथेति** ॥ स्वयमेवेति शेषः । कथा ब्रवीति कश्चिदिति मुख्यकर्तृलकारे कथा कर्म तस्य पुरुषप्रयत्नाविवक्षायाङ्कर्मकर्तरि लकारः । कर्मवत्त्वात् तङ् । न यक् । **अवोचतेति** ॥ कर्मवत्त्वेऽपि न चिण् । किन्तु 'ब्रुवो वचिः, अस्यतिवक्तिख्यातिभ्योऽङ्, वच उम्' इति भाव । उच्चारणेन शब्देषु प्राकट्यरूपविशेषदर्शनात् कर्मस्थक्रियत्व बोध्यम् । 'णिश्रन्थि' इति ण्यन्तस्य श्रन्थे' ग्रन्थे ब्रूञ' आत्मनेपदविधावकर्मकस्य च यक्चिणोः प्रतिषेध' भारद्वाजीयाभिमत इत्यर्थ. । अत्र णि इति सामान्यस्य ग्रहणम् । नत्वहेतुमण्णिच एव । ततश्च णिङन्तस्यापि न यक्चिणाविति मत्वा आह । **पुच्छमुदस्यति उत्पुच्छयते गौरिति** ॥ 'पुच्छादुदसने' इति णिङ् । नन्वत्र उदसने पुच्छङ्कर्म । गौर्मुख्यकर्त्री । ननु कर्मकर्त्री । ततश्च नात्र यक्चिणो. प्रसक्तिरित्यत आह । **अन्तर्भावितण्यर्थतायामिति** ॥ उदस्यतीत्यस्य उदासयतीत्यन्तर्भावितण्यर्थताश्रयणे उत्पुच्छयते गा देवदत्तः इत्यत्र गोः कर्म । तस्य गोरूपकर्मण. प्रेरयितृपुरुषप्रयत्नानपेक्षया कर्तृत्वविवक्षायाङ्कर्मकर्तरि लकारे उत्पुच्छयते गौरिति भवतीत्यर्थः । स्वयमेव पुच्छमुदस्यति गौरिति बोधः । **उदपुपुच्छतेति** ॥ अत्र न चिण् । **शप्चङाविति** ॥ उत्पुच्छयते गौरित्यत्र यकः प्रतिषेधात् शप् । उदपुपुच्छतेत्यत्र चिण. प्रतिषेधाच्चङित्यर्थ' । ननु 'श्रन्थ मोक्षणे, ग्रन्थ ग्रथने'

षेधाच्छप्चङौ । श्रन्थिग्रन्थ्योराधृषीयत्वाण्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थम् । श्रन्थति मेखलां देवदत्तः । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । श्रन्थते । अश्रन्थिष्ट । क्रैयादिकयोस्तु श्रथ्नीते ग्रथ्नीते स्वयमेव । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । 'वेः शब्दकर्मणः' (सू २७०७) 'अकर्मकाच्च' (सू २७०८) इति तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे । विकुर्वते सैन्धवाः । व्यकारिष्ट । व्यकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत ।

## २७७२ । कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च । (३-१-९०)

अनयोः कर्मकर्तरि न यक् । किं तु श्यन्परस्मैपदं च । आत्मनेपदाप-

---

इति श्रन्थिग्रन्थ्योः चौरादिकतया णिग्रहणेनैव सिद्धे पुनर्ग्रहणं व्यर्थमित्यत आह । **श्रन्थिग्रन्थ्योरिति** ॥ **ग्रन्थति ग्रन्थमिति** ॥ रचयतीत्यर्थः । **श्रन्थति मेखलां देवदत्तः इति** ॥ विस्रसयतीत्यर्थः । देवदत्त इत्युभयत्रान्वेति । अत्र कर्मणो ग्रन्थस्य मेखलायाश्च कर्तृत्वविवक्षायां ग्रन्थते ग्रन्थः श्रन्थते मेखलेति च भवति । स्वयमेव ग्रन्थरचनाश्रयस्स्रसनाश्रयश्चेत्यर्थः । तत्र कर्मवत्त्वेऽपि न यगिति भावः । अग्रन्थिष्ट अश्रन्थिष्टेत्यत्र च न चिण् । **क्रैयादिकयोस्त्विति** ॥ कर्मवत्त्वेऽपि तयोर्यकि निषिद्धे श्नाविकरण इति भावः । आत्मनेपदविधावकर्मकोऽय तदुदाहरति । **विकुर्वते सैन्धवाः इति** ॥ सैन्धवाः अश्वाः । अत्र विपूर्वः कृञ् वल्गने वर्तते । उपसर्गवशात् । तदाह । **वल्गन्तीति** ॥ शब्दङ्कुर्वन्तीत्यर्थः । धात्वर्थेनोपसङ्ग्रहादकर्मकोऽयम् । मुख्यकर्तरि लकारः । **वेरिति** ॥ 'वेः शब्दकर्मणः' इत्यनन्तर पठितेन 'अकर्मकाच्च' इति सूत्रेण परगामिन्यपि फले तङित्यर्थः । नन्वस्याकर्मकतया अश्वानाङ्कर्मकर्तृत्वाभावान्न यकः प्रसक्तिरित्यत आह । **अन्तर्भावितेति** ॥ विपूर्वकः कृञ् शब्दङ्कुर्वाणस्य प्रेरणे यदा वर्तते, तदा विकुर्वते सैन्धवानिति भवति । अश्वान् शब्दाययतीत्यर्थः । तत्र सैन्धवानाङ्कर्मणा पुरुषप्रेरणाविवक्षया कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः इति भवति । वल्गन्तीत्यर्थः । अत्र सैन्धवानाङ्कर्मकर्तॄणाङ्कर्मवत्त्वेऽपि न यगित्यर्थः । **व्यकारिष्टेति** ॥ चिणि निषिद्धे ण्यन्तत्वाभावाच्चङभावे सिचश्चिण्वदिटि वृद्धिरिति भावः । चिण्वदिडभावपक्षे आह । **व्यकृतेति** ॥ 'ह्रस्वादङ्गात्' इति सिचो लोपः । **कुषिरञ्जोः** ॥ **अनयोरिति** ॥ 'कुष निष्कर्षे, रञ्ज रागे' इत्यनयोरित्यर्थः । **कर्मकर्तरीति** ॥ 'अचः कर्मकर्तरि' इत्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । 'न दुहस्नुनमाम्' इत्यतः नेति यगिति चानुवर्तते । तदाह । **यगिति** ॥ **किन्तु श्यनिति** ॥ श्यन्विषयेत्यर्थः । एवञ्च यग्विषयादन्यत्र न श्यनः प्रवृत्तिः । न यगित्यनुक्त्वा श्यनो विधाने तु यग्विषयादन्यत्रार्धधातुकेऽपि श्यन् स्यादिति भावः । प्राचाङ्ग्रहणाद्विकल्पः । तदाह । **कुष्यति कुष्यते वा पादः इति** ॥ स्वयमेवेति शेषः । **कुष्णाति पादं देवदत्तः इति** ॥ मुख्यकर्तृलकारे पादः कर्म । तस्य पुरुषप्रयत्नमनपेक्ष्य कर्तृत्वविवक्षाया श्यनि परस्मैपदे च कुष्यतीति रूपम् । तदुभयाभावे यकि आत्मनेपदे च कुष्यते

वादः । कुष्यति—कुष्यते वा पादः । कुष्णाति पादं देवदत्तः । रज्यति—रज्यते वा वस्त्रम् । यगविषये तु नास्य प्रवृत्तिः । कोषिषीष्ट । रङ्क्षीष्ट ।

इति कर्मकर्तृतिङ्प्रकरणम् ।

---

। श्रीरस्तु ।

# ॥ अथ लकारार्थप्रकरणम् ॥

## २७७३ । अभिज्ञावचने लृट् । (३-२-११२)

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः ।

---

इति रूपमिति भाव॰ । यक्श्यनो. स्वरे विशेष. । श्यनि कुष्यन्ती वधूरित्यत्र 'शप्श्यनोर्नित्यम्' इति नित्य नुम् । यकि तु 'आच्छीनद्यो' इति विकल्प॰ स्यात् । **रज्यति रज्यते वा वस्त्रमिति** ॥ अन्तर्भावितण्यर्थताया दैवादिकत्वात् श्यनि रज्यति वस्त्रमित्यत्र रञ्जयतीत्यर्थः । मुख्ये कर्तरि लः कर्मणः कर्तृत्वविवक्षायान्तु रज्यति रज्यते वेति भवतीत्यर्थः । **यगविषये तु नास्त्येवेति** ॥ श्यनिति शेष. । यक प्रतिषिध्य तत्स्थाने श्यनो विधिसामर्थ्यादित्यर्थ. । **कोषिषीष्टेति** ॥ आर्धधातुकत्वेन यगविषयत्वान्न श्यन् । तत्सन्नियोगशिष्टत्वात् परस्मैपदञ्च श्यनभावे सति न भवतीति भाव. । **रङ्क्षीष्टेति** ॥ रञ्जेस्सीयुटि जस्य कुत्वेन गः। तस्य चर्त्वेन क॰ । अनुस्वारपरसवर्णौ । अत्र कर्मकर्तृप्रकरणे सर्वत्र पच्यते ओदनः स्वयमेवेति, भिद्यते काष्ठ स्वयमेवेत्यादौ स्वयशब्दस्य आत्मना करणेनेत्यर्थः । नत्वात्मना कर्त्रेति । तथा सति कर्मण्येव लः स्यादिति 'णेरणौ' इति सूत्रे कैयटे स्पष्टम् ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाङ्कर्मकर्तृप्रक्रिया समाप्ता ।

---

अथ लकारार्थप्रक्रिया. निरूप्यन्ते ॥ **अभिज्ञावचने लृट्** ॥ अभिज्ञा स्मृति॰ सा उच्यते बोध्यते अनेनेति विग्रहः । तदाह । **स्मृतिबोधिन्युपपदे इति** ॥ स्मृतिबोधकपदे समीपे प्रयुज्यमाने सतीत्यर्थः । भूते इत्यधिकृतम् । 'अनद्यतने लुङ्' इत्यत. अनद्यतने इत्यनुवर्तते ।

स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादियोगेऽपि । तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात् ।

## २७७४ । न यदि । (३-२-११३)

यद्योगे इक्तं न । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ।

## २७७५ । विभाषा साकाङ्क्षे । (३-२-११४)

उक्तविषये ऌड्वा स्यात् । लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः । स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ् । यच्छब्दयोगेऽपि 'न यदि' (सू २७७४) इति बाधित्वा परत्वाद्विकल्पः । 'परोक्षे लिट्' (सू २१७१) । चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । 'सुप्तोऽहं किल विलालाप' 'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' । अत्यन्तापह्नवे लिड्वक्तव्यः' (वा २०८४) । कलिङ्गेष्ववात्सीः । नाहं कलिङ्गाञ्जगाम ।

---

तदाह। **भूतानद्यतने इति** ॥ **लङः इति** ॥ अनद्यतने लडित्यस्यापवाद इत्यर्थः। **स्मरसीति** ॥ हे कृष्ण गोकुले अवसमिति यत् तत् स्मरसीत्यर्थ.। अत्र वाक्यार्थ. कर्म । कृतङ्गोकुलवास स्मरसीति यावत् । **एवमिति** ॥ स्मरसीति पदयोग इव बुध्यसे इत्यादिस्मृतिबोधकपदयोगेऽपि ऌडित्यर्थः । ननु बुध्यत्यादेः स्मृतित्वेन रूपेण स्मृत्यर्थकत्वाभावात्कथमिह ऌडित्यत आह । **तेषामपीति** ॥ पर्यवसानगत्या स्मृतिबोधकत्वात्तद्योगेऽपि ऌट् । एतदर्थमेव वचनग्रहणमिति भावः । **न यदि** ॥ यदीति सप्तमीति मत्वा आह । **यद्योगे इति ॥ उक्तं नेति** ॥ अभिज्ञावचने इति ऌट् न भवतीत्यर्थः । **अभिजानासीति** ॥ वने अभुञ्ज्महीति यत् तत् स्मरसीत्यर्थः । **विभाषा** ॥ **उक्तविषये इति** ॥ अभिज्ञाबोधिन्युपपदे इत्यर्थः । **लक्ष्यलक्षणभावेनेति** ॥ अत्र व्याख्यानमेव शरणम् । ज्ञाप्यज्ञापकभावेनेत्यर्थः । **स्मरसीति** ॥ पूर्वं वने अवसाम, तत्र वने गाः अवारयाम इति यत् तत् हे कृष्ण स्मरसीत्यर्थः । अत्र यत् इत्यस्य गम्यत्वेऽपि तस्य प्रयोगाभावान्न यद्योग.। **वासो लक्षणमिति** ॥ चारणस्येति शेषः । उभयत्रापि ऌड्विकल्प. । अभिज्ञावचनयोगस्य अविशिष्टत्वादिति भावः।नच यद्योग एव 'विभाषा साकाक्षे' इति विकल्पोऽस्त्विति भ्रमितव्यम्। 'यदि वायं विकल्पः' इति भाष्यात्तदाह। **यच्छब्दयोगेऽपीति** ॥ 'परोक्षे लिट्' इति प्राक् व्याख्यातमपि विशेषविवक्षया स्मर्यते । अहमर्थस्य प्रत्यक्षत्वात् परोक्षत्वाभावात् कथमस्य लिट उत्तमपुरुष इत्यत आह । **उत्तमपुरुषे चित्तेति** ॥ **सुप्तः इति** ॥ सुप्तत्वादह विललपेत्यर्थः । अत्र स्वापाच्चित्तविक्षेपः । **बहु जगदेति** ॥ मत्तत्वात्तस्य पुरस्तादह बहु जगदेत्यर्थः । अत्र उन्मादाच्चित्तविक्षेपः । आदिना व्यासङ्गसङ्ग्रहः । **अत्यन्तापह्नवे इति** ॥ अपरोक्षार्थमिदम् । **कलिङ्गेष्ववात्सीरिति** ॥ अतस्त्वन्न सहवासयोग्य इति प्रश्नः । 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु

## २७७६ । हशश्वतोर्लङ् च । (३-२-११६)

अनयोरुपपदयोर्लिङ्विषये लङ् स्यात् । चाल्लिट् । इति हाकरोच्चकार वा । शश्वदकरोच्चकार वा ।

## २७७७ । प्रश्ने चासन्नकाले । (३-२-११७)

प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः । अगच्छत्किम् । जगाम किम् । अनासन्ने तु कंसं जघान किम् ।

## २७७८ । लट् स्मे । (३-२-११८)

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

## २७७९ । अपरोक्षे च । (३-२-११९)

भूतानद्यतने लट् स्यात्स्मयोगे । एवं स्म पिता ब्रवीति ।

## २७८० । ननौ पृष्टप्रतिवचने । (३-२-१२०)

'अनद्यतने' 'परोक्षे' इति निवृत्तम् । भूते लट् स्यात् । अकार्षीः किम् । ननु करोमि भोः ।

## २७८१ । नन्वोर्विभाषा । (३-२-१२१)

---

च । तीर्थयात्रां विना यातः पुन सस्कारमर्हति ॥' इति वचनादिति भाव । नाहङ्कलिङ्गाञ्जगामेत्युत्तरम् । कलिङ्गशब्दस्य जनपदविशेषवाचित्वात् बहुवचनम् । अत्र तद्देशगमनोत्तरकालिकवासविषयकप्रश्ने कारणीभूतगमनस्यैवापलापादत्यन्तापह्नवो ज्ञेयः । कलिङ्गेष्ववात्सीरित्यत्र 'अकर्मकधातुभिर्योगे देशः कालो भावः' इति कर्मसञ्ज्ञायाः पाक्षिकत्वान्न द्वितीयेति कारकाधिकारे निरूपितम् । **हशश्वतोर्लङ् च** ॥ स्पष्टम् । **प्रश्ने चासन्नकाले** ॥ प्रश्ने इत्यनेन प्रश्नविषयो विवक्षित इत्याह । **प्रष्टव्यः प्रश्नः इति** ॥ अर्थे इत्यनन्तर वर्तमानाद्धातोरिति शेषः । प्रयोक्तृदृष्टिपथातिक्रान्तत्वमनासन्नकालकत्वम् । वृत्तौ तु पञ्चवर्षातीतकाल· अनासन्नकाल इत्युक्तम् । **लट् स्मे** ॥ स्मेत्यव्ययम् । तद्योगे लिड्विषये लट् स्यादित्यर्थः । **यजति स्मेति** ॥ स्मशब्दो भूतकालद्योतक. । **अपरोक्षे च** ॥ **एवं स्मेति** ॥ पिता एवमुक्तवानित्यर्थः । **ननौ पृष्ट** ॥ **निवृत्तमिति** ॥ व्याख्यानादिति भावः । अकार्षीः किमिति प्रश्नः । ननु करोमीत्युत्तरम् । अकार्षमित्यर्थ. । नन्विति सबोधने । **नन्वोर्विभाषा** ॥

नशब्दे नुशब्दे च लड्वा स्यात्। अकार्षीः किम्। न करोमि। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्।

## २७८२। पुरि लुङ् चास्मे। (३-२-१२२)

अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्तते। पुराशब्दयोगे भूतानद्यतने विभाषा लुङ्। चाल्लट्। न तु स्मयोगे। पक्षे यथाप्राप्तम्। वसन्तीह पुरा छात्राः–अवात्सुः–अवसन्–ऊषुर्वा। 'अस्मे' किम्। यजति स्म पुरा। भविष्यतीत्यनुवर्तमाने।

## २७८३। यावत्पुरानिपातयोर्लट्। (३-३-४)

यावद्भुङ्क्ते। पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। 'निपातयो' किम्। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति।

## २७८४। विभाषा कदाकर्ह्योः। (३-३-५)

भविष्यति लट् वा स्यात्। कदा कर्हि वा भुङ्क्ते–भोक्ष्यते–भोक्ता वा।

---

न नु अनयोर्द्वन्द्वः। तदाह। **नशब्दे नुशब्दे चेति**॥ **लड्वा स्यादिति**॥ भूते इति शेषः। अकार्षीः किमिति प्रश्नः। न करोमि नाकार्षमित्युत्तरम्। अहं नु करोमि। अहं न्वकार्षमिति च। 'तर्के नु स्यात्' इत्यमरः। **पुरि लुङ् चास्मे**॥ अस्मे इति च्छेदः। पुरेत्याकारान्तमव्ययम्। पुरीति तस्य सप्तम्येकवचनम्। आत इति योगविभागादाल्लोपः। **मण्डूकप्लुत्येति**॥ अत्र व्याख्यानमेव शरणम्। **चाल्लडिति**॥ तथाच लुङ् लट् च वेति फलितम्। **पक्षे इति**॥ एतदुभयाभावपक्षे इत्यर्थः। **यथाप्राप्तमिति**॥ अनद्यतनपरोक्षभूते लिट्। परोक्षत्वाविवक्षायान्तु लडित्यर्थः। 'अभिज्ञावचने' इत्यारभ्य एतदन्ताः विधयस्तृतीयस्य द्वैतीयीकाः। अथ तृतीयस्य तार्तीयीका विधयो वक्ष्यन्ते। **भविष्यतीत्यनुवर्तमाने इति**॥ 'भविष्यति गम्यादयः' इति सूत्रादिति भावः। **यावत्पुरा**॥ यावत् पुरा इति द्वे पदे। अनयोः प्रयुज्यमानयोर्लट् स्यादित्यर्थः। लुडादेरपवादः। **निश्चयं द्योतयतः इति**॥ 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः। **यावद्दास्यते तावद्भोक्ष्यते इति**॥ यत्परिमाणक तत्परिमाणकमित्यर्थः। 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुबन्तत्वेन निपातत्वाभावान्न लडिति भावः। **करणभूतयेति**॥ पुरा यास्यतीति प्रत्युदाहरणान्तरम्। पुर्शब्दस्य पुरेति तृतीयान्तमिदम्। तत्स्फोरणाय करणभूतयेत्युक्तम्। **विभाषा कदाकर्ह्योः**॥ भविष्यति लड्वा स्यादिति शेषपूरणम्। लडभावपक्षे लुट्लृटौ यथाप्राप्तम्। तदाह। **कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वेति**॥ नच कर्हियोगे लडभावपक्षे लुडेवोचितः, नतु लट्। 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिलन्तकर्हियोगविरोधादिति वाच्यम्। लड्दाहरणस्य कदायोगमात्रविषयत्वादित्याहुः।

## २७८५ । किंवृत्ते लिप्सायाम् । (३-३-६)

किंवृत्तं विभक्त्यन्तम् । भविष्यति लड्वा स्यात् । कं कतरं कतमं वा भोजयसि—भोजयिष्यसि—भोजयितासि वा । 'लिप्सायाम्' किम् । कः पाटलिपुत्रं गमिष्यति ।

## २७८६ । लिप्स्यमानसिद्धौ च (३-३-७)

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड्वा स्यात् । योऽन्नं ददाति—दास्यति--दाता वा । स स्वर्गं याति--यास्यति--याता वा ।

## २७८७ । लोडर्थलक्षणे च । (३-३-८)

लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लड्वा स्यात् । कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय । पक्षे लुट्लृटौ ।

## २७८८ । लिङ् चोर्ध्वमौहूर्तिके । (३-३-९)

ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः । निपातनात्समासः उत्तरपदवृद्धिश्च । ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः । मुहूर्ता-

---

**किंवृत्ते लिप्सायाम्** ॥ किशब्देन वृत्त निष्पन्न किंवृत्तमित्यभिप्रेत्य आह । **विभक्त्यन्तमिति** ॥ **लड्वेति** ॥ लडभावे तु लुट्लृटौ यथाप्राप्तम् । किंवृत्तशब्देन विभक्त्यन्तडतरडतमान्तानामेव ग्रहणमिति वृत्ति. । तेन कदादियोगे भविष्यति लट् । 'यद्वृत्तान्नित्यम्' इति सूत्रभाष्यरीत्या तु किंवृत्ताना सर्वेषा कदेत्यादीनामपि ग्रहणमिति युक्तम् । **कं कतरं कतमं वेति** ॥ क्षुधितमन्नलिप्सुमिति शेषः । **लिप्स्यमानसिद्धौ च** ॥ **लड्वेति** ॥ पक्षे लिप्स्यमानसिद्धौ लिप्सायां सत्वेऽप्यकिंवृत्तार्थमिदमिति मत्वोदाहरति । **योऽन्नमिति** ॥ योऽन्न ददाति स स्वर्ग याति । योऽन्न दास्यति स स्वर्ग यास्यति । योऽन्न दाता स. स्वर्ग यातेत्यन्वयः । **लोडर्थलक्षणे च** ॥ **लोडर्थः प्रैषादिरिति** ॥ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु इत्यनुवृत्तौ लोट् चेति लोड्विधानादिति भावः । **कृष्णश्चेदिति** ॥ कृष्णभोजनकाले त्वङ्गाश्चारयेत्यर्थ· । अत्र कृष्णभोजन लोडर्थस्य गोचारणप्रैषस्य लक्षणम् । परिच्छेदकमिति यावत् । **पक्षे लुट्लृटाविति** ॥ कृष्णश्चेद्भोक्ता, भोक्ष्यते, वा त्वङ्गाश्चारयेत्युदाहार्यम् । **लिङ् चोर्ध्वमौहूर्तिके** ॥ ऊर्ध्वमिति विभक्तिप्रतिरूपकमव्ययम् । ऊर्ध्वं मुहूर्तान् भव इति विग्रहः । केचित्तु ऊर्ध्वमिति द्वितीयान्तम् । 'अकर्मकधातुभिर्योगे' इति कर्मवत्त्वादित्याहु· । **ऊर्ध्वमौहूर्तिकः इति** ॥ ऊर्ध्वमुहूर्तशब्दात् भवार्थे कालाट्ठञिति भावः । ननु तद्धितार्थेत्यत्र दिक्सङ्ख्ये इत्यनुवृत्तेस्समानाधिकाराच्चात्र कथं समास इत्यत आह । **निपातनादिति** ॥ पूर्वपदे आदिवृद्धिमाशङ्क्य आह । **उत्तरपदवृद्धिश्चेति** ॥ निपातनादित्यनुषज्यते । **ऊर्ध्वमौहूर्तिके इति** ॥ मुहू-

दुपरि उपाध्यायश्चेदागच्छेत्--आगच्छति--आगमिष्यति--आगन्ता वा अथ त्वं छन्दोऽधीष्व।

## २७८९। वर्तमानसामीप्ये वर्तमानवद्वा। (३-३-१३१)

समीपमेव सामीप्यम्। स्वार्थे ष्यञ्। 'वर्तमाने लट्' (सू २१५१) इत्यारभ्य 'उणादयो बहुलम्' (सू ३१६९) इति यावद्येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोऽसि। अयमागच्छामि। अहमागमम्। कदा गमिष्यसि। एष गच्छामि—गमिष्यामि वा।

## २७९०। आशंसायां भूतवच्च। (३-३-१३२)

वर्तमानसामीप्ये इति नानुवर्तते। भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम्। देवश्चेदवर्षीद्वर्षति—वर्षिष्यति वा धान्यमवाप्स्म—

---

र्तादूर्ध्वकालीने इत्यर्थः। लोडर्थलक्षण इत्यत्रान्वेति प्रैषादाविति। **लिङ्लटाविति** ॥ चाल्लट् समुच्चीयत इति भाव। **वा स्तः इति** ॥ पक्षे लुट्लृटौ यथाप्राप्तम्। **छन्दः इति** ॥ वेद इत्यर्थः। इति तृतीयस्य तृतीये भविष्यतीत्यधिकारस्थाः लविधय। अथास्मिन्नेव तृतीयपादे कतिपयान् विधीनाह। **वर्तमानसामीप्ये** ॥ **स्वार्थे ष्यञिति** ॥ अस्मादेव निर्देशात् चतुर्वर्णादेराकृतिगणत्वाद्वेति भावः। **इत्यारभ्येति** ॥ तृतीयस्य द्वितीये 'वर्तमाने लट्' इत्यारभ्य आपादसमाप्ते 'उणादयो बहुलम्' इति तृतीयपादादिमसूत्रात् प्राक् वर्तमानाधिकारः। तस्मिन्नधिकारे येन विशेषणेन याभ्यः प्रकृतिभ्यः वर्तमाने प्रत्यया विहिताः ते सर्वे तेनैव विशेषणेन ताभ्य प्रकृतिभ्य वर्तमानसमीपकाले भूते भविष्यति च वा भवन्तीत्यर्थ। अत्र भूते भविष्यति चेत्यार्थिकम्। तयोरेव वर्तमानसामीप्यसत्वात्। कदा आगतोऽसीत्यागत प्रति प्रश्न। अयमागच्छामीत्युत्तरम्। अव्यवहितपूर्वकाले आगतवानस्मीत्यर्थः। वर्तमानसमीपकाले भूते लट्। अयमित्यनेन आगमनकालीन प्रस्वेदपरिकरबन्धादियुक्त रूप निर्दिश्यते। इदानीमागम सूचयितु वर्तमानवत्त्वाभावे भूते लङ्। कदा गमिष्यसीति गमनात्प्राक् प्रश्ने, एष गच्छामि इत्युत्तरम्। अव्यवहितोत्तरकाले गमिष्यामीत्यर्थः। एष इति तु अयमितिवत् व्याख्येयः। वर्तमानकालसमीपे भविष्यति लट्। गमिष्यामि वेति वर्तमानवत्त्वाभावे भविष्यति लृट्। **आशंसायां भूतवच्च** ॥ **नानुवर्तते इति** ॥ अत्र व्याख्यानमेव शरणम्। अप्राप्तस्य प्रियस्य प्राप्तीच्छा आशसा। सा च भविष्यद्विषयैव। भूते इच्छाविरहात्। तदाह। **भविष्यति काले इति** ॥ **देवश्चेदिति** ॥ देवः पर्जन्य., अवर्षीच्चेत् धान्यमवाप्स्म। वर्षति चेत् वपामः। वर्षिष्यति चेत् वप्स्याम इत्यन्वयः। भूतवद्भावात् भविष्यति लुङ्। अवर्षीदिति अवाप्स्मेति च

वपाम:—वप्स्यामो वा। 'सामान्यातिदेशे विशेषानतिदेशः।' तेन लङ्लिटौ न।

## २७९१ । क्षिप्रवचने लृट् । (३-३-१३३)

क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति । शीघ्रं वप्स्यामः । नेति वक्तव्ये लङ्ग्रहणं लुटोऽपि विषये यथा स्यात् । श्वः शीघ्रं वप्स्यामः ।

## २७९२ । आशंसावचने लिङ् । (३-३-१३४)

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत् । गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय ।

## २७९३ । नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । (३-३-१३५)

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ न। यावज्जीवमन्नमदाद्दास्यति

---

भवति । वपधातोर्लुङि उत्तमपुरुषबहुवचने अवाप्स्मेति भवति। वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लृङ् । वर्तमानवत्त्वपक्षे तु लट् । तदुभयाभावे तु लृट् । ननु भूतवत्त्वपक्षे लङ्लिटावपि कुतो न स्यातामित्यत आह । **सामान्यातिदेशे इति** ॥ भूतत्वसामान्ये विहितस्यातिदेशादनद्यतनभूतत्वविशेषविहितयोर्लङ्लिटोर्नातिदेश इत्यर्थः । एतच्च भाष्ये स्पष्टम् । **क्षिप्रवचने लृट्** ॥ वचनग्रहणात् क्षिप्रपर्याये इति लभ्यते । तदाह । **क्षिप्रपर्याये इति** ॥ **पूर्वविषये इति** ॥ आशंसायामित्यर्थ.। 'आशंसायां भूतवच्च' इत्यस्यापवादः। ननु क्षिप्रवचने नेत्येतावतैव आशंसाया क्षिप्रपर्याये उपपदे भविष्यति न भूतवत् न वर्तमानवदिति लाभाल्लङ्ग्रहणमनर्थकमित्यत आह । **नेति वक्तव्ये इति** ॥ क्षिप्रवचने नेत्युक्ते 'सामान्यातिदेशे विशेषानातिदेशः' इति न्यायेन भविष्यत्सामान्ये विहितस्य लृड एव निषेध· स्यात्, नतु लुटः । तस्य अनद्यतनभविष्यद्विशेषविधानात् । लङ्ग्रहणे तु उक्तविषये लृडेव स्यात्, नतु लकारान्तरमिति लाभाल्लुटोऽपि विषये लृडेवेति लभ्यत इत्यर्थः । **श्वः शीघ्रं वप्स्यामः इति** ॥ अनद्यतनत्वद्योतनाय श्वश्शब्द· । अत्र न लुडिति भाव· । **आशंसावचने लिङ्** ॥ आशंसायाः प्राप्तीच्छायाः भूते असम्भवात् भविष्यतीति लभ्यत इति मत्वा आह । **भविष्यतीति** ॥ 'आशंसायां भूतवच्च' इत्यस्यापवाद.। तदाह । **नतु भूतवदिति**॥ **गुरुश्चेदिति**॥ गुरुरुपेयाच्चेत् क्षिप्रमधीयीयेत्याशंसे इत्यन्वयः। क्षिप्रयोगेऽपि परत्वाल्लिङेव नतु लृडिति भाव· । **नानद्यतनवत्** ॥ क्रियाया. प्रबन्ध· सातत्यम्। तदाह । **क्रियाया सातत्ये इति** ॥ अनद्यतनवदित्यनेन अनद्यतने भूते भविष्यति च विहितौ लङ्लुटौ विवक्षितौ। तदाह । **लङ्लुटौ नेति**॥ अनद्यतने भूते लङ् न भवति। भविष्यत्यनद्यतने तु लुट् नेत्यर्थ.। क्रियासातत्ये लङ्निषेधमुदाहरति । **यावज्जीवमन्नमदादिति** ॥ लुङि 'गातिस्था' इति सिचो लुक् । सामीप्ये

वा। सामीप्यं तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित । सोमेनायष्ट । येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते ।

## २७९४ । भविष्यति मर्यादावचनेऽवरस्मिन् । (३-३-१३६)

भविष्यति काले मर्यादोक्तावावरस्मिन्प्रविभागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्यः आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपास्यामः ।

## २७९५ । कालविभागे चानहोरात्राणाम् । (३-३-१३७)

पूर्वसूत्रं सर्वमनुवर्तते । अहोरात्रसम्बन्धिनि विभागे प्रतिषेधार्थमिदम् । योगविभाग उत्तरार्थः । योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । 'अनहोरात्राणाम्' किम् । योऽयं मासः आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे ।

उदाहरिष्यन्नाह । **सामीप्यमिति** ॥ **येयमिति** ॥ पौर्णमास्या उपरि कृष्णपक्षे कतिपयाहोरात्रैः व्यवधानेऽपि सामीप्यमस्त्येव । पौर्णमास्यन्तरेण सजातीयेन व्यवधानाभावात् । **आधितेति** ॥ धाधातोर्लुङि 'स्थाघ्वोरिच्च' इति धाधातोरित्त्व सन किन्त्वञ्च । 'ह्रस्वादङ्गात्' इति सिचो लोप । **सोमेनायष्टेति** ॥ येय पौर्णमास्यतिक्रान्ता तस्यामित्यनुषज्यते । अथ क्रियासातत्ये लुटो निषेधमुदाहरति । **येयममावास्येति** ॥ **सोमेन यक्ष्यते इति** ॥ येयममावास्या आगामिना तस्यामित्यनुषज्यते । **भविष्यति मर्यादा** ॥ अवरस्मिन्निति च्छेद । **अनद्यतनवन्नेति** ॥ लुट् नेत्यर्थ । अक्रियाप्रबन्धार्थमिति भाष्यम् । असामीप्यार्थञ्चेति कैयट. । **योऽयमिति** ॥ कस्मिंश्चिज्जनपदविशेषे वसत पाटलिपुत्राख्य नगरविशेष जिगमिषोरिद वाक्यम् । मध्येमार्गङ्कौशाम्बी नाम काचिन्नगरीति स्थितिः । तत्र आपाटलिपुत्रात् योऽय गन्तव्योऽध्वा तस्य अध्वनः मध्ये वर्तिन्याः कौशाम्ब्या' यदवर पूर्वप्रदेश' तत्र सक्तून् श्व.प्रभृति पास्याम इति योजना । अत्र कौशाम्ब्या इति मर्यादा गम्यते । अवरमित्यनेन अवरत्वङ्गम्यते । अत्र भविष्यत्यनद्यतने लुट् न, किन्तु लृडेवेति भाव । **कालविभागे** ॥ **पूर्वसूत्रमिति** ॥ 'भविष्यति मर्यादावचनेऽवरस्मिन्' इति सूत्रमित्यर्थ. । ननु कालमर्यादायामपि पूर्वसूत्रेणैव सिद्धमित्यत आह । **अहोरात्रेति** ॥ तथाच अहोरात्रसम्बन्धिनि प्रविभागे भविष्यति मर्यादावचने इत्युक्तविधिर्न भवतीत्यर्थ' । ननु 'भविष्यति मर्यादावचनेऽवरस्मिन्' इत्येकमेव सूत्रङ्कुतो नेत्यत आह । **योगविभाग उत्तरार्थः इति** ॥ इदमुत्तरसूत्रे स्पष्टीभविष्यति । **योऽयं वत्सर आगामीति** ॥ कालतो मर्यादायामुदाहरणम् । **आग्रहायण्या इति** ॥ मार्गशीर्षपौर्णमास्या इत्यर्थः । **युक्ताः इति** ॥ नियमयुक्ता इत्यर्थ. । अध्येष्यामहे इत्यत्र न लुट् । किन्तु लृडेवेति भावः । **पञ्चदशरात्रः इति** ॥ पञ्चदश रात्रयो यस्य पक्षस्येति बहुव्रीहिः । 'अच्प्रत्यन्ववपूर्वात्' इत्यच्समासान्त । यद्वा पञ्चदशानां रात्रीणां समाहारः पञ्चदशरात्रः । 'अहः-

## २७९६ । परस्मिन्विभाषा । (३-३-१३८)

अवरस्मिन्वर्जं पूर्वसूत्रद्वयमनुवर्तते। अप्राप्तविभाषेयम् । योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे । अध्येतास्महे । 'लिङ्निमित्ते ऌङ् क्रियातिपत्तौ' (सू २२२९) भविष्यतीत्येव । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् ।

## २७९७ । भूते च । (३-३-१४०)

पूर्वसूत्रं सम्पूर्णमनुवर्तते ।

## २७९८ । वोताप्योः । (३-३-१४१)

'वा 'आ' 'उताप्योः' 'उताप्योः—' (सू २८०९) इत्यतः प्राग्भूते लिङ्निमित्ते ऌङ् वेत्यधिक्रियते । पूर्वसूत्रं तु 'उताप्योः' इत्यादौ प्रवर्तत इति विवेकः ।

## २७९९ । गर्हायां लडपिजात्वोः । (३-३-१४२)

आभ्यां योगे लट् स्यात् । कालत्रये गर्हायाम् । लुङादीन्परत्वादयं बाधते । अपि जायां त्यजसि । जातु गणिकामाधत्से । गर्हितमेतत् ।

---

सर्वैकदेश' इत्यच्समासान्त' । 'सङ्ख्यापूर्वं रात्र क्लीबम्' इति तु 'लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्य' इति वचनान्न भवति । **परस्मिन्विभाषा** ॥ **अनुवर्तते इति** ॥ तथाच भविष्यति काले मर्यादोक्तौ परस्मिन् विभागे अनद्यतनवद्वेति फलितम् । 'लिङ्निमित्ते ऌङ् क्रियातिपत्तौ' इति व्याख्यात भूधातुनिरूपणे । **भूते च** ॥ अधिकारोऽयम् । **अनुवर्तते इति** ॥ तथाच लिङ्निमित्ते ऌङ् क्रियातिपत्तौ भूत इति अधिक्रियते इति फलितमिति भावः । **वोताप्योः** ॥ अयमप्यधिकार. । वा आ उताप्योरिति छेदः । भूते इति लिङ्निमित्ते ऌङिति चानुवर्तते । तदाह । **उताप्योरित्यतः प्रागिति** ॥ उताप्यो' समर्थयोरित्यतः प्रागित्यर्थः । नन्वनेन 'उताप्योः' इत्यत प्राक् भूते लिङ्निमित्ते ऌङ्वेत्यधिकाराक्रान्तत्वात् भूते चेति पूर्वमधिकारसूत्रनिर्विषयमित्यत आह । **पूर्वसूत्रं त्विति** ॥ 'उताप्योः समर्थयोर्लिङ्' इत्यारभ्य 'इच्छार्थेभ्यो विभाषा' इत्यतः भूते चेति पूर्वमधिकारसूत्र प्रवर्तत इत्यर्थः । इमावधिकारौ यत्र लिङ्विधिस्तत्रैव प्रवर्तते, नतु लडादिविधौ । लिङ्निमित्ताभावात् । **गर्हायाम्** ॥ अपि जातु अनयोर्द्वन्द्वः । अत्र 'वोताप्योः' इति 'भूते लिङ्निमित्ते ऌङ् वा' इत्यधिकारो न सम्बध्यते । लड्विधानेन तद्विषये लिङ्निमित्ताभावात् । **कालत्रये इति** ॥ वर्तमाने भूते भविष्यति चेत्यर्थः । भविष्यतीति निवृत्तम् । अतः कालसामान्ये लडिति भावः । **परत्वादिति** ॥ अनवकाशत्वाच्चेत्यपि द्रष्टव्यम् । अपि जायामित्यत्र जातु गणिकामित्यत्र च अपि-

## २८००। विभाषा कथमि लिङ् च। (३-३-१४३)

गर्हायामित्येव। कालत्रये लिङ् चाल्लट्। कथं धर्मं त्यजेः त्यजसि वा। पक्षे कालत्रये लकारः। अत्र भविष्यति नित्यं लृङ् भूते वा। कथं नाम तत्र-भवान्धर्ममत्यक्ष्यत्।

## २८०१। किंवृत्ते लिङ्लृटौ। (३-३-१४४)

गर्हायामित्येव। विभाषा तु नानुवर्तते। कः—कतरः—कतमो वा हरिं निन्देत्—निन्दिष्यति वा। लृङ् प्राग्वत्।

## २८०२। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि। (३-३-१४५)

गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। न सम्भावयामि न मर्षये वा भवान्हरिं निन्देत्—निन्दिष्यति वा। कः—कतरः—कतमो वा हरिं निन्देत्—निन्दिष्यति वा। लृङ् प्राग्वत्।

---

जातुशब्दौ निन्दाद्योतकौ। तदाह। **गर्हितमेतदिति** ॥ **विभाषा कथमि लिङ् च** ॥ **गर्हायामित्येवेति** ॥ अनुवर्तत एवेत्यर्थ। कालत्रये लिङिति शेषपूरणम्। भविष्यतीति निवृत्तमिति भावः। चाल्लडिति समुच्चीयते इति शेष। तथाच कथमित्यस्मिन् प्रयुज्यमाने कालत्रये गर्हायां लिङ्लटौ वा स्त इति फलितम्। **कथं धर्मं त्यजेरिति** ॥ त्यक्तवान् त्यक्ष्यसि त्यजसि वेत्यर्थः। गर्हितमेतदिति कथशब्दाद्गम्यते। लटि उदाहरति। **त्यजसि वेति** ॥ उक्तोऽर्थः। **पक्षे इति** ॥ विभाषाग्रहणाल्लिङ्लटोरभावपक्षे भूते वर्तमाने भविष्यति च कालत्रये लिट्लङ्लुङ्लट्लुट्लृट इत्यर्थः। **अत्रेति** ॥ अत्र उक्तविषये भविष्यति काले क्रियायाः अनिष्पत्तौ गम्यमानायां 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति नित्यमेव लृङ्। कथमो गर्हायाश्च लिङ्निमित्तस्य सत्वादित्यर्थः। विशेषविहितत्वादिति भावः। **भूते वेति** ॥ 'वोताप्योः' इति भूते लिङ्निमित्ते लृङ् वेति अधिकृतत्वादुक्तविषये भूतकाले लृङ् वेत्यर्थः। भविष्यति नित्य लृडित्यत्रोदाहरति। **कथन्नामेति** ॥ तत्रभवानिति समुदायः पूज्यवाची। वेदप्रामाण्याभ्युपगन्तेति यावत्। एवंविधः कथं धर्ममत्यक्ष्यत्। तत्त्यागस्य गर्हितत्वादिति भाव। **किंवृत्ते लिङ्लटौ** ॥ **नानुवर्तते इति** ॥ व्याख्यानादिति भाव। विभक्त्यन्तं डतरडतमान्तञ्च किंशब्दनिष्पन्न किंवृत्तमित्युक्तम्। तस्मिन्प्रयुज्यमाने गर्हाया लिङ्लटौ स्त इत्यर्थ. । सर्वलकाराणामपवादाविति वृत्तिः। **लृङ् प्राग्वदिति** ॥ भविष्यति नित्यं लृङ्, भूते वेति प्रागुक्तमिहाप्यनुसन्धेयमित्यर्थः। लिङ्निमित्तस्य किंवृत्तस्य गर्हायाश्च सत्त्वादिति भाव। **अनवक्लृप्त्यमर्ष** ॥ **निवृत्तमिति** ॥ व्याख्यानादिति भाव.। अनवक्लृप्त्यमर्षयोः लिङ्लृटोश्च यथासङ्ख्यन्नेष्यते। अल्पाच्तरस्य अमर्षशब्दस्य पूर्वनिपातत्यागादिति वृत्तिः। **न सम्भावयामीति** ॥ अकिंवृत्ते उदाहरणम्। भवान् हरिन्निन्देदिति यत् तत् न सम्भावयामि न मर्षये वेत्यन्वयः। किंवृत्ते उदाहरति। **कः**

## २८०३ । किंकिलास्त्यर्थेषु लृट् । (३-३-१४६)

अनवक्लृप्त्यमर्षयोरित्येतत् 'गर्हायां च' (सू २८०६) इति यावदनुवर्तते । किंकिलेति समुदायः क्रोधद्योतक उपपदम् । अस्त्यर्थाः अस्तिभवतिविद्यतयः । लिडोऽपवादः । न श्रद्दधे न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि । अत्र लृङ् न ।

## २८०४ । जातुयदोर्लिङ् । (३-३-१४७)

'यदायद्योरुपसंख्यानम्' (वा २२७५) । लृटोऽपवादः । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ।

## २८०५ । यच्चयत्रयोः । (३-३-१४८)

यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षयामि ।

**कतरः इति** ॥ **लृङ् प्राग्वदिति** ॥ भविष्यति नित्य लृङ्, भूते वेत्युक्तमिहाप्यनुसन्धेयामित्यर्थः । **किङ्किल** ॥ किङ्किलेतिसमुदायस्य अस्त्यर्थानाञ्च द्वन्द्व । **यावदिति** ॥ 'गर्हायाञ्च' इत्यभिव्याप्येतयर्थः । .किङ्किलेत्यास्मिन् अस्त्यर्थेषु च प्रयुज्यमानेषु अनवक्लृप्त्यमर्षयोर्लट् स्यादित्यर्थ. । पूर्वसूत्रेण लृङ्लटोः प्राप्तौ लृडेवेत्यर्थमिदम् । तदाह । **लिङोऽपवादः इति** ॥ **न श्रद्दधे इति** ॥ न सम्भावयामीत्यर्थः । त्व शूद्रान्न भोक्ष्यसे इति यत् तत् न श्रद्दधे न मर्षये वा किङ्किलेत्यन्वयः। किङ्किलेति क्रोध द्योतयति। **अस्तीति** ॥ शूद्रस्य स्त्री शूद्री। ताङ्गमिष्यसीत्यस्ति भवति विद्यते वेत्यन्वय. । **अत्र लृङ् नेति** ॥ भविष्यति नित्यं लृड, भूते वेत्युक्तमिह न सम्भवति । अत्र लिङो विध्यभावेन लिङ्निमित्तविरहात् । **जातुयदोर्लिङ्** ॥ जातु यदा अनयोः प्रयोगे अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थ । यदेति विभक्तिप्रतिरूपकमव्ययम् । अनवक्लृप्त्यमर्षयोराकिन्वृत्तेऽपीति लिडलटौ प्राप्तौ लिडेवेत्यर्थमिदम् । तदाह। **लृटोऽपवादः इति** ॥ **यदायद्योरिति** ॥ यदायद्योः प्रयोगेऽपि उक्तविषये लिङ उपसङ्ख्यानमित्यर्थः। जात्वादिशब्दा. उदाहरणे अनवक्लृप्त्यमर्षद्योतकाः । त्वादृशो हरिन्निन्देदित्येतत् नावकल्पयामि न मर्षयामि वेत्यन्वयः। नावकल्पयामीत्यस्य न सम्भवायामीत्यर्थः। **लृङ् प्राग्वदिति** ॥ भविष्यति नित्यं लृङ् भूते वेत्युक्तमिहाप्यनुसन्धेयमित्यर्थः । जात्वादियोगस्य अनवक्लृप्त्यमर्षयोश्च लिङ्निमित्तत्वादिति भावः । **यच्चयत्रयोः** ॥ यच्चेति समुदाये यत्रशब्दे च प्रयुज्यमाने अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः । लृटोऽपवादः। योगविभागस्तु उत्तरसूत्रे अनयोरेवानुवृत्त्यर्थः । उदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ । त्वमेवङ्कुर्या इत्येतत् न श्रद्दधे न मर्षयामि वेत्यन्वयः । अत्रापि भविष्यति नित्य लृङ्, भूते वेत्युक्तमनुसन्धेयम् । लिङ्निमित्तस्य

## २८०६ । गर्हायां च । (३-३-१४९)

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् । यच्च यत्र वा त्वं शूद्रं याजयेः । अन्याय्यं तत् ।

## २८०७ । चित्रीकरणे च । (३-३-१५०)

यच्च यत्र वा त्वं शूद्रं याजयेः । आश्चर्यमेतत् ।

## २८०८ । शेषे लृडयदौ । (३-३-१५१)

यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । 'अयदौ' किम् । आश्चर्यं यदि मूको[1]ऽधीयीत ।

## २८०९ । उताप्योः समर्थयोर्लिङ् । (३-३-१५२)

बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः । 'समर्थयोः' किम् । उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नः प्रच्छादनं च गम्यते । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् ।

मत्वात् । **गर्हायाञ्च** ॥ **निवृत्तमिति** ॥ व्याख्यानादिति भावः । 'यच्चयत्रयोः' इति लिडिति चानुवर्तते । तदाह । **यच्चयत्रयोर्योगे इति** ॥ **लिङेवेति** ॥ नतु लकारान्तरमित्यर्थः । उदाहरणे यच्चेति यत्रेति च गर्हाद्योतकम् । त्व शूद्र याजयेरिति यत् तदन्याय्यमित्यन्वयः । लङ् प्राग्वत् । **चित्रीकरणे च** ॥ यच्चयत्रयोः प्रयोगे आश्चर्ये गम्ये लिङेव स्यात्, नतु लकारान्तरमित्यर्थ. । उदाहरणे यच्चेति यत्रेति चाश्चर्यद्योतकम् । त्व शूद्र याजयेरिति यत् तदाश्चर्यमित्यन्वय· । **शेषे लृडयदौ** ॥ यच्चयत्राभ्यामन्यश्शेषः । तदाह । **यच्चयत्राभ्यामन्यस्मिन्निति** ॥ यदिभिन्ने इति शेष· । **लृट् स्यादिति** ॥ नतु लकारान्तरमित्यर्थः । **आश्चर्यमिति** ॥ अन्धः कृष्ण द्रक्ष्यतीत्याश्चर्यमित्यन्वयः । नामेत्यव्ययमाश्चर्यद्योतकम् । **मूकः इति** ॥ मूको अधीयीत इत्याश्चर्यमित्यन्वयः । यदीत्याश्चर्यद्योतकम् । **उताप्योः** ॥ समौ अर्थौ ययोरिति विग्रहः । शकन्ध्वादित्वात्पररूपम् । एकार्थकयोरित्यर्थ· । कमर्थमादायानयोरेकार्थकत्वमित्यत आह । **बाढमिति** ॥ तथाच बाढार्थकयोः उत अपि इत्यनयो. प्रयोगे लिङ् स्यान्न तु लकारान्तरमित्यर्थ । **उत अपि वेति** ॥ उत हन्यादघं हरि., अपि हन्यादघ हरिरित्यन्वयः । उतापी बाढमित्यर्थकौ । **गम्यते इति** ॥ उत दण्डः पतिष्यतीत्यत्र उतशब्देन प्रश्नो गम्यते । अपिधास्यति द्वारमित्यत्र अपिना धाधातो प्रच्छादनार्थकत्वङ्गम्यत इत्यर्थः ॥ **इतः प्रभृतीति** ॥ 'वोताप्यो' इति मर्यादायामाङ् । 'उताप्यो.' इत्यतः प्राक् भूते लिङ्निमित्ते लङ् वेत्यधिक्रियते । 'उताप्योः' इत्यादिसूत्रेषु-भूते 'लिङ्-

1. अत्र सोऽधीयीतेत्येव पाठ· बहुषु ग्रन्थेषु दृश्यते ।

## २८१० । कामप्रवेदनेऽकच्चिति । (३-३-१५३)

स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति । कामो मे भुञ्जीत भवान् । 'अकच्चिति' इति किम् । कच्चिज्जीवति ।

## २८११ । सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे । (३-३-१५४)

अलमर्थोऽत्र प्रौढिः । सम्भावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते । सम्भावनेऽर्थे लिङ् स्यात्, तच्चेत्सम्भावनमलमिति सिद्धाप्रयोगे सति । अपि गिरिं शिरसा भिन्द्यात् । 'सिद्धाप्रयोगे' किम् । अलं कृष्णो हस्तिनं हनिष्यति ।

## २८१२ । विभाषा धातौ सम्भावनवचनेऽयदि । (३-३-१५५)

---

निमित्ते लृङ् क्रियातिपत्तौ' इत्येवाधिक्रियते इत्युक्तम् । एवञ्च 'उताप्योः' इति सूत्रप्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूते लृडित्येवाधिक्रियते, नतु वाग्रहणम् । अतो नित्यमेवात्र विषये क्रियातिपत्तौ भूते भविष्यति च लृडित्यर्थः । **कामप्रवेदनेऽकच्चिति** ॥ अकच्चितीति च्छेदः । तदाह । **नतु कच्चितीति** ॥ सर्वलकारापवादः । अभिप्राय. इच्छा । **कामः इति** ॥ भवान् भुञ्जीतेति मे कामः । इच्छेत्यर्थ· । अत्र लिङ्निमित्तस्य सत्त्वात् क्रियातिपत्तौ भूतेऽपि नित्य लृङ् । प्रश्न एवायङ्कामप्रवेदनद्योतक इति प्राप्ति । अत्र कच्चिच्छब्दस्य इच्छार्थकत्वाभावादिच्छार्थेष्विति वक्ष्यमाणन्नात्र प्रवर्तते । **सम्भावने** ॥ **अलमर्थोऽत्र प्रौढिरिति** ॥ पर्याप्तिरित्यर्थः । **विपरिणम्यते इति** ॥ सम्भावने इति यत् सप्तम्यन्तन्तत् आवर्त्य प्रथमया सम्भावनमिति च विपरिणम्यते । यत्तु अलम् इति प्रथमान्तन्तत् आवर्त्य सप्तम्या अलमि इति च विपरिणम्यत इत्यर्थः । छान्दस विभक्तिव्यत्ययमाश्रित्येति शेषः । तथाच सम्भावने इति सप्तम्यन्त सम्भावनमिति प्रथमान्तञ्च लभ्यते । तथा अलम् इति प्रथमान्तं अलमि इति सप्तम्यन्तञ्च लभ्यते। तत्र सम्भावने इति सप्तम्यन्तमर्थनिर्देशपरम् । तदाह । **सम्भावनेऽर्थे लिङ् स्यादिति** ॥ उत्कटान्यतरकोटिक ज्ञान सम्भावनमित्युच्यते । सम्भावनमिति प्रथमान्तन्तु अलमिति प्रथमान्तेन विशेष्यते । इतिर्हेतौ । तदाह । **तच्चेदिति** ॥ तत्सम्भावनम् अल पर्याप्तिहेतुकञ्चेदित्यन्वय. । षिधधातोर्ज्ञानार्थकात् 'मतिबुद्धि' इति वर्तमाने कर्मणि क्ते सिद्धशब्द· । सिद्धे गम्यमानेऽप्यलमर्थे अप्रयोगो यस्य सः सिद्धाप्रयोगः तस्मिन्निति विग्रह· । अलमि इति सप्तम्यन्तमत्र विशेष्यसमर्पक सम्बध्यते । अलशब्दप्रयोग विनापि तदर्थे गम्यमाने इति यावत् । तदाह । **सिद्धाप्रयोगे सतीति** ॥ अलमीति शेष. । **अपि गिरिमिति** ॥ बलवन्तं पुरुषमधिकृत्य अत्युक्तिरियम् । प्रायेण शिरसा गिरि भेत्तुमय समर्थ इत्यर्थः । गिरिभेदसम्भावनस्य सामर्थ्यहेतुकत्वद्योतकः अपिशब्दः। अत्र लिङ्निमित्तसत्त्वात् क्रियातिपत्तौ भूते लृङ्। 'अलमिति सम्भावने सिद्धाप्रयोगश्चेत्' इति सुवचम् । **विभाषा धातौ** ॥ अयदीति छेदः । तदाह । **नतु**

पूर्वसूत्रमनुवर्तते। संभावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनम्। सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान्। 'अयदि' किम्। सम्भावयामि यद्भुञ्जीथास्त्वम्।

## २८१३। हेतुहेतुमतोर्लिङ्। (३-३-१५६)

वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। 'भविष्यत्येवेष्यते।' (वा २२७५)। नेह। हन्तीति पलायते।

## २८१४। इच्छार्थेषु लिङ्लोटौ। (३-३-१५७)

इच्छामि भुञ्जीत—भुङ्क्तां वा भवान्। एवं कामये प्रार्थये इत्यादियोगे बोध्यम्। 'कामप्रवेदने इति वक्तव्यम्' (वा २२७६)। नेह। इच्छन्करोति।

## २८१५। लिङ् च। (३-३-१५९)

समानकर्तृकेषु इच्छार्थेषु लिङ्। भुञ्जीयेतीच्छति।

## २८१६। इच्छार्थेभ्यो विभाषा वर्तमाने। (३-३-१६०)

लिङ् स्यात्पक्षे लट्। इच्छेत्। इच्छति। कामयेत। कामयते।

---

**यदिति** ॥ लिङभावे लट्। 'शेषे लृडयदौ' इत्यतस्तदनुवृत्तेः। **सम्भावयामीति** ॥ प्रायेण भोक्तुं समर्थ इत्यर्थः। **हेतुहेतुमतोर्लिङ्** ॥ पूर्वसूत्राद्विभाषानुवृत्तिं मत्वा आह। **वा स्यादिति** ॥ पक्षे लट्। हेतुभूते फलभूते वाऽर्थे वर्तमानाद्धातोर्लिङ् वा स्यादिति यावत्। **भविष्यत्येवेति** ॥ लिडित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः। **हन्तीतीति** ॥ इतिर्हेतौ वर्तमानकालिकहननाद्धेतोरित्यर्थः। अत्र लिङ्निमित्तसत्त्वात्। भविष्यति तु क्रियातिपत्तौ भूते च लृङ्। **इच्छार्थेषु लिङ्लोटौ** ॥ इच्छार्थकधातुषु प्रयुज्यमानेषु लिङ्लोटौ स्तः। सर्वलकारापवादः। असमानकर्तृकविषयमिदम्। समानकर्तृकेषु तु 'लिङ् च' इति वक्ष्यते। **इच्छामीति** ॥ भुञ्जीत भवानिति इच्छामीत्यन्वयः। **कामप्रवेदने इति** ॥ परं प्रति स्वाभिप्रायाविष्करणे इच्छार्थेषु लिङ्लोटाविति विधिरित्यर्थः। **इच्छन्करोतीति** ॥ परं प्रति स्वाभिप्रायाविष्करणाभावान्न लिङ्लोटाविति भावः। 'कामप्रवेदनेऽकच्चिति' इति सूत्रन्तु प्रकरणादिना यत्र कामप्रवेदनं नत्विच्छार्थकमुपपदमस्ति तद्विषयमिति बोध्यम्। इत उत्तरसूत्रे समानकर्तृकेषु तुमुन्निति तु कृदधिकारे व्याख्यास्यते। **लिङ् च** ॥ समानकर्तृकेष्विति इच्छार्थेष्विति चानुवर्तते। तदाह। **समानेत्यादि** ॥ **भुञ्जीयेतीच्छतीति** ॥ अत्र भोक्तुरेव इषिकर्तृत्वात्समानकर्तृकत्वम्। समानकर्तृकेषु इच्छार्थेष्विति च लोटो निवृत्त्यर्थमिदं सूत्रम्। क्रियातिपत्तौ तु भविष्यति नित्यं लृङ् भूते वेत्यधिकारः सम्पूर्णः। **इच्छार्थेभ्यो** ॥ लिडित्येवानुवर्तते। समानकर्तृकेष्विति तु निवृत्तम्। तत् सूचयन्नुदाहरति। **इच्छेत्। इच्छतीति** ॥ 'विधिनिमन्त्रण' इति भूधातौ व्याख्यातमपि सूत्र-

‘विधिनिमन्त्रण—’ (सू २२०८) इति लिङ्। विधौ। यजेत। निमन्त्रणे। इह भुञ्जीत भवान्। आमन्त्रणे। इहासीत। अधीष्टे। पुत्रमध्यापयेद्भवान्। ‘संप्रसारणे’। किं भो वेदमधीयीय उत तर्कम्। प्रार्थने। भो भोजनं लभेय। एवं लोट्।

## २८१७। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। (३-३-१६३)

लोट् च। प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा। भवता यष्टव्यम्। भवान्यजताम्। चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम्।

## २८१८। लिङ् चोर्ध्वमौहूर्तिके। (३-३-१६४)

प्रैषादयोऽनुवर्तन्ते। मुहूर्तादूर्ध्वं यजेत—यजताम्—यष्टव्यम।

## २८१९। स्मे लोट्। (३-३-१६५)

पूर्वसूत्रस्य विषये। लिङः कृत्यानां चापवादः। ऊर्ध्वं मुहूर्ताद्यजतां स्म।

## २८२०। अधीष्टे च। (३-३-१६६)

---

क्रमप्राप्तत्वात् स्मारितम्। **सम्प्रसारणे इति** ॥ सम्प्रश्ने इत्यर्थः। **एवं लोडिति** ॥ लोट् चेति विध्यादिषु विहितो लोडप्येवमुदाह्रियते इत्यर्थः। **प्रैषातिसर्ग** ॥ **लोट् चेति** ॥ पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते। कृत्यसञ्ज्ञकाः प्रत्ययाः वक्ष्यमाणो लोट् च प्रैषादिषु भवन्तीत्यर्थः। प्रैषे अतिसर्गे च कृत्यप्रत्ययमुदाहरति। **भवता यष्टव्यमिति** ॥ भावे तव्यप्रत्ययः। लोटमुदाहरति। **भवान् यजतामिति** ॥ ननु चकारेण लोटोऽनुकर्षण व्यर्थम्। प्रैषस्य विधिरूपतया अतिसर्गस्य आमन्त्रणरूपतया च ‘लोट् च’ इत्यनेनैव सिद्धेरित्यत आह। **चकारेणेति** ॥ प्राप्तकाले यथा। गुरुणा भोक्तव्य। गुरुर्भुञ्जीत। भोजन प्राप्तावसरमित्यर्थः। प्राप्तकाले च कृत्याश्च, इत्युक्तौ तु निमन्त्रणादिष्वपि कृत्या. स्युः। अतः प्रैषादिग्रहणम्। **लिङ् चोर्ध्वमौहूर्तिके** ॥ ‘लोडर्थलक्षणे च’ इत्युत्तरमेवजातीयकमेव सूत्र लिङ्लङ्लुङ्लृङ्विधायक प्राक् पठितम्। तत्र ऊर्ध्वमौहूर्तिकशब्दो व्याख्यातः। **प्रैषादयः इति** ॥ तथाच मुहूर्तादुपरितनकालके धात्वर्थे विद्यमानाद्धातोः प्रैषातिसर्गप्राप्तकालेषु लिङ् च स्यात् लोट् कृत्याश्चेत्यर्थः। क्रमेण लिङादीनुदाहरति। **मुहूर्तादूर्ध्वं यजेत—यजतां—यष्टव्यमिति** ॥ अत्र प्राप्तकाले अप्राप्तस्य लिङो विधिः। विध्यादिसूत्रे लिङ्विधौ प्राप्तकालस्य ग्रहणाभावात्। प्रैषातिसर्गयोस्तु विध्यादिसूत्रेणैव लिङ् सिद्ध्यति। लिङ एवात्र विधौ तु, तेन लोटः कृत्यानाञ्च बाधः स्यात्। अतश्चकारेण तेषामपि विधिरिति ज्ञेयम्। **स्मे लोट्** ॥ **पूर्वसूत्रेति** ॥ तथाच मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकालेषु लोडेव स्यात्, नतु लिङ् कृत्याश्चेत्यर्थः। तदाह। **लिङः कृत्यानाञ्चापवादः इति** ॥ **अधीष्टे च** ॥ **लोट् स्यादिति** ॥ ‘अधीष्टे च’ इति विहितस्य लिङोऽपवादः। अधीष्ट

---

१. अय पाठः व्याख्यातभिमतः ‘सप्रश्ने’ इति पाठस्तु साम्प्रदायिकः।

स्मे उपपदेऽधीष्टे लोट् स्यात् । त्वं स्माध्यापय ।

## २८२१ । लिङ् यदि । (३-३-१६८)

यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात्। कालः समयो वेला वा यद्भुञ्जीत भवान् ।

## २८२२ । अर्हे कृत्यतृचश्च । (३-३-१६९)

चाल्लिङ् । त्वं कन्यां वहेः ।

## २८२३ । शकि लिङ् च । (३-३-१७२)

शक्तौ लिङ् स्यात् । चात्कृत्याः । भारं त्वं वहेः । 'माङि लुङ्' (२२१९) मा कार्षीः । कथं मा भवतु मा भविष्यतीति । नायं माङ् किंतु माशब्दः ।

## २८२४ । धातुसम्बन्धे प्रत्ययाः । (३-४-१)

---

सत्कारपूर्वको व्यापार इत्युक्तम्। त्व स्माध्यापयेति गुरुं प्रत्युक्ति । 'स्मे लोडधीष्टे च' इत्येकसूत्रत्वेन सिद्धे योगविभागस्तु ऊर्ध्वमौहूर्तिक इत्यनुवृत्तिनिवृत्त्यर्थ । 'कालसमयवेलासु तुमुन्' इत्युत्तरसूत्रन्तु कृदधिकारे व्याख्यास्यते । **लिङ् यदि** ॥ कालसमयवेलास्वित्यनुवर्तते । सर्वलकारापवादः । तुमुनपवादश्च। भुञ्जीत भवानिति यत् तस्य काल· समयो वेला वेत्यन्वय· । **अर्हे कृत्यतृचश्च** ॥ **चाल्लिङिति** ॥ योग्ये कर्तरि गम्ये कृत्याः तृच् लिङ् चेत्यर्थ. । **त्वङ्कन्यां वहेरिति** ॥ कन्याविवाहस्य योग्य इत्यर्थ । **शकि लिङ् च** ॥ शकि इति भावे क्विबन्तम् । शक्तौ गम्यमानायामित्यर्थ । **भारं त्वं वहेरिति** ॥ वोढु शक्त इत्यर्थ. । माङि लुङिति व्याख्यातमपि क्रमप्राप्त विशेषविवक्षया पुन. स्मार्यते । ननु सर्वलकारापवादोऽयमित्युक्तम्। एव सति मा भवतु मा भविष्यतीति कथमिति शङ्कते। **कथमिति** ॥ परिहरति। **नायं माङिति** ॥ **किन्त्विति** ॥ ङकारानुबन्धविनिर्मुक्तस्यापि अव्ययेषु पाठादिति भाव. । नच माशब्दमादाय मा भवत्वित्यादिप्रयोगसत्त्वे 'माङि लुङ्' इति व्यर्थमिति वाच्यम्। सर्वलकारविषये 'न माङ्योगे' इत्यडाड्रहितलुङन्तप्रयोगार्थन्तदावश्यकत्वात् । **धातुसम्बन्धे** ॥ धातुशब्देन धात्वर्थो लक्ष्यते । धातोः सम्बन्ध इति विग्रह· । सम्बन्धस्य द्विनिष्ठत्वात् । तथाच धात्वर्थयोस्सम्बन्धे सति प्रत्ययाः स्युरिति लब्धम् । कस्मिन्नर्थे इत्याकाङ्क्षायाङ्काले इति गम्यते । 'वर्तमाने लट्' इत्यारभ्य तत्तत्कालविशेषेष्वेव प्रत्ययविधिदर्शनात् । तत्र तत्तद्विधिभिरेव तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन्काले

१ वस्तुत. स नास्त्येव । 'आङ्माङोश्च' इति सूत्रे भाष्ये तथा ध्वनितत्वात्–इति शेखरकृत् ॥

धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकं दर्शनमर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्।

## २८२५। क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः। (३-४-२)

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः। तिङामपवादः। तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च।

---

इति गम्यते। तदाह। **धात्वर्थानामित्यादिना** ॥ धात्वर्थयोरित्यर्थः। उदाहरणबहुत्वाभिप्राय बहुवचनम्। 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यादिसूत्रे यत्र काले ये प्रत्यया उक्ताः ते धात्वर्थयोस्सम्बन्धे गम्ये ततोऽन्यस्मिन्नपि काले स्युरिति यावत्। तथाच वसन् ददर्शेत्यत्र लडादेशः शतृप्रत्ययो भूतकाले इति सिद्ध भवति। ननु 'वसन् ददर्श' इत्यत्र भूते लडिव वर्तमाने लिडित्यपि स्यादित्यत आह। **तिङन्तेति** ॥ वसन् ददर्शेत्यादौ तिङन्तवाच्यदर्शनादिक्रिया प्रधानम्। वासादिक्रिया तु दर्शनादिक्रियार्थत्वात् गुणभूता। अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एव इह प्रत्ययाः कालान्तरेषु विधीयन्त इत्यर्थः। **भूते लडिति** ॥ एवञ्च उषित्वा ददर्शेत्यर्थः। तदाह। **अतीतेति** ॥ अतीतवासे कर्ता यस्येति विग्रहः। 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। उदाहरणान्तरमाह। **सोमयाजीति** ॥ सोमेन इष्टवान्य. स सोमयाजी 'करणे यजः' इति भूते विहितो णिनि. इह भवितेत्यनद्यतभाविष्यल्लुडन्तप्रधानक्रियानुसारेण अनद्यतनभविष्यति बोध्य.। तदाह। **सोमेन यक्ष्यमाणः इति** ॥ **भवनमिति** ॥ उत्पत्तिरित्यर्थः। गोमानासीदित्यप्युदाहार्यम्। अत्र गौरस्यास्तीति अस्तिक्रियाया वर्तमानायान्तदस्यास्त्तीति विहितो मतुप् गौरस्यासीदितीति भूतायामस्तिक्रियायाम्भवति। धात्वर्थद्वयसम्बन्धस्य सत्त्वात्। एतेन अर्थद्वारके धात्वोस्सम्बन्धे इत्यपि व्याख्यानं परास्तम्। तथा सति परस्परसम्बन्धार्थबोधकधातुद्वयप्रयोगे प्रत्यया इत्यर्थलाभात् गोमानासीदित्यत्र मतुबन्तापत्ते। नहि धात्वोरिह प्रयोगोऽस्ति। धात्वर्थयोस्सम्बन्धे इत्यर्थाभ्युपगमे तु गोमानासीदित्यत्र धातुद्वयप्रयोगाभावेऽपि धात्वर्थद्वयस्य सत्त्वादासीदित्यर्थे मतुप् निर्बाध इत्यन्यत्र विस्तरः। **क्रियासमभि** ॥ अत्र चत्वारि वाक्यानि। तत्र क्रियासमभिहारे लोडिति प्रथम वाक्यम्। पौन पुन्य भृशार्थश्च क्रियासमभिहार इत्युक्तम्। क्रियासमभिहारे इति धात्वर्थविशेषणम्। क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोरिति लभ्यते। लोट् तु द्योतकः। तदाह। **पौनःपुन्ये भृशार्थे च द्योत्ये इति** ॥ क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोर्लोडिति यावत्। सर्वलकारापवादः। लोटो हिस्वाविति द्वितीय वाक्य व्याचष्टे। **तस्येति** ॥ पूर्ववाक्यविहितस्य लोटः हिस्वावादेशौ स्त इत्यर्थः। **तिङामपवादः इति** ॥ अपवादावित्यर्थः। प्रत्येका-

### ३११३ । अर्हः प्रशंसायाम् । (३-२-१३३)

अर्हन् ।

### ३११४ । आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । (३-२-१३४)

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः ।

### ३११५ । तृन् । (३-२-१३५)

कर्ता कटम् ।

### ३११६ । अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । (३-२-१३६)

अलङ्करिष्णुरित्यादि । (निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।)

### ३११७ । णेश्छन्दसि । (३-२-१३७)

'वीरुधः पारयिष्णवः' ।

**अर्हः प्रशंसायाम्** ॥ अर्ह इति पञ्चमी । शतृप्रत्यय इति शेषः । **अर्हन्निति** ॥ पूजाम्प्राप्तुं योग्य इत्यर्थः । अत्र प्रशस्तस्यैव पूजायोग्यत्वात् प्रशंसा गम्यते । **आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ॥ आङभिविधौ । तदाह । **क्विपमभिव्याप्येति** ॥ 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति सूत्रमभिव्याप्येति यावत् । तत्र ताच्छीलिकाः प्रत्ययाः प्रायेण सोपसर्गेभ्यो नेति 'आढ्यसुभग' इति सूत्रे भाष्ये स्पष्टम् । तच्छीलः तत्स्वभावः फलमनपेक्ष्य स्वभावादेव प्रवर्तमान इति यावत् । स धर्मः यस्य स तद्धर्मा । स्वधर्मोऽयमिति प्रवर्तमानः । तस्य धात्वर्थस्य साधुकर्ता तत्साधुकारी । **तृन्** ॥ धातोस्तृन्प्रत्ययः स्यात् तच्छीलादिषु कर्तृषु । तच्छीले उदाहरति । **कर्ता कटमिति** ॥ कटकरणक्रियाशील इत्यर्थः । 'न लोक' इति षष्ठीनिषेधः । 'न लोक' इति सूत्रे तृन्नित्यनेन 'लट शतृ' इत्यारभ्य एतत्सूत्रस्थनकारेण प्रत्याहाराश्रयणात् । तद्धर्मणि यथा । मण्डयितारः श्राविष्ठायनाः । ऊढां वधू श्राविष्ठायना नाम देशविशेषीयाः वधूमण्डनं स्वधर्म इत्यनुष्ठातार इत्यर्थः । तत्साधुकारिणि कर्ता कटमित्येवोदाहरणम् । कटं साधु करोतीत्यर्थः । **अलंकृञ** ॥ अलंकृञ्, निराकृञ्, प्रजन, उत्पच, उत्पत, उन्मद, रुचि, अपत्रप, वृतु, वृधु, सह, चर, एषां द्वादशानां द्वन्द्वात्पञ्चमी । एभ्यः तच्छीलादिषु कर्तृषु इष्णुच् स्यात् । **इत्यादीति** ॥ निराकरिष्णुः प्रजनिष्णुः उत्पचिष्णुः उत्पतिष्णुः उन्मदिष्णुः रोचिष्णुः अपत्रपिष्णुः वर्तिष्णुः वर्धिष्णुः सहिष्णुः चरिष्णुः । **णेश्छन्दसि** ॥ ण्यन्ताद्धातोरिष्णुच् स्यात् छन्दसीत्यर्थः । **पारयिष्णव इति** ॥

## ३११८ । भुवश्च । (३-२-१३८)

छन्दसीत्येव । भविष्णुः । कथं तर्हि 'जगत्प्रभोरप्रभविष्णु वैष्णवम्' इति । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णु. । नैतद्भाष्ये दृष्टम् ।

## ३११९ । ग्लाजिस्थश्च क्स्नुः । (३-२-१३९)

छन्दसीति निवृत्तम् । गिदयं न तु किन् । तेन स्थ ईत्त्वं न । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । 'श्र्युकः किति' (सू २३८१) इत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । 'दंशेश्छन्दस्युपसङ्ख्यानम्' (वा २१२९) । 'दङ्क्ष्णवः पशवः ।'

## ३१२० । त्रसिगृधिधृषिक्षिपेः क्नुः । (३-२-१४०)

त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

## ३१२१ । शमित्यष्टाभ्यो घिनुण् । (३-२-१४१)

उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा—शमिनीतरा इत्यत्र 'उगितश्च' (सू ९८७) इति ह्रस्वविकल्पः ।

---

णृधातोर्ण्यन्तादिष्णुचि णेर्लोपम्बाधित्वा 'अयामन्ताल्वाय्य' इत्ययू । इद सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम् । **भुवश्च** ॥ **छन्दसीत्येवेति** ॥ भूधातोरिष्णुच् स्यात् । तच्छीलादिषु छन्दसीत्यर्थः । अण्यन्तार्थ आरम्भ । **ग्लाजिस्थश्च** ॥ **निवृत्तमिति** ॥ व्याख्यानादिति भावः । चात् भुव इत्यनुकृष्यते । ग्ला, जि, स्था, एषान्द्वन्द्वात्पञ्चमी । ग्ला, जि, स्था, भू इत्येभ्य· क्स्नुः स्यात् तच्छीलादिष्वित्यर्थः । ककार इत् । स्थास्नु इत्यत्र कित्त्वलक्षण 'घुमास्था' इतीत्त्वमाशङ्क्य आह । **गिदयमिति** ॥ सूत्रे चर्त्वेन ककारनिर्देश इति भावः । **गित्त्वान्न गुण इति** ॥ 'क्क्ङिति च' इत्यत्र गस्य चर्त्वेन ककारान्तरप्रश्लेषादिति भाव । ननु भूष्णुरित्यत्र इट् स्यात्, 'श्र्युक किति' इति कित एव इण्निषेधात् । अस्य च गित्त्वादित्यत आह । **श्र्युक इति** ॥ **प्रश्लेषादिति** ॥ चर्त्वेनेति भावः । **त्रसिगृधि** ॥ तच्छीलादिषु कर्तृष्विति शेष । **त्रस्नुरिति** ॥ नड्वशीति नेट । गृध्नुः धृष्णुरि यत्र कित्त्वान्न गुणः। **शमित्यष्टाभ्यः** ॥ इतिशब्दः आदिपर्यायः । शमादयः दिवादौ स्थिताः । तेभ्यः अष्टाभ्यो घिनुण् स्यात् तच्छीलादिष्वित्यर्थ । घित्त्वमुत्तरसूत्रार्थम् । "अकर्मकेभ्य एव घिनुण्" इति भाष्यम् । **शमिनितरा-शमिनीतरेति** ॥ शमिन्शब्दात् स्त्रियान्नान्तलक्षणङीबन्तात् तरबन्ताट्टाप् । **ह्रस्वविकल्पः इति** ॥ भाष्यमते उगित्त्वाद्ध्रस्वः । काशिकामते तु उगित्त्वाभावान्न ह्रस्वः ।

न चैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः । झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । 'नोदात्तोपदेशस्य–' (सू २७६३) इति वृद्धिनिषेधः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेः अलङ्कृञादिसूत्रेणेष्णुजुक्तः, वासरूपविधिना घिनुणपि । उन्मादी । 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति तु प्रायिकम् ।

**३१२२ । सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । (३–२–१४२)**

घिनुण्स्यात् । सम्पर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ।

**३१२३ । वौ कषलसकत्थस्रम्भः । (३-२-१४३)**

---

नच ह्रस्वाभावे 'तसिलादिषु' इति पुंवत्त्व शङ्क्यम् । 'सञ्ज्ञापूरण्योश्च' इति निषेधात् । ननु भाष्यरीत्या उगित्त्वाभ्युपगमे शमी–शमिनौ इत्यादौ 'उगिदचाम्' इति नुम् स्यादित्याशङ्क्य निराकरोति । **न चैवमिति** ॥ **झल्ग्रहणमपकृष्येति** ॥ 'नपुंसकस्य झलचः' इति उत्तरसूत्रादिति भाव. । एतच्च प्रकृतसूत्रे 'युवोरनाकौ' इति सूत्रे च भाष्ये स्पष्टम् । शमादिभ्यो घिनुणि उपधावृद्धिमाशङ्क्य आह । **नोदात्तेति** ॥ **प्रमादीति** ॥ मान्तत्वाभावान्न वृद्धिनिषेधः । ननु उत्पूर्वान्मदेरुन्मादीति कथ घिनुण् । अलङ्कृञादिसूत्रे उत्पूर्वान्मदेर्विशिष्य इष्णुचो विधानादित्यत आह । **उत्पूर्वादित्यादिना** ॥ ननु कथमत्र ताच्छीलिके घिनुणि वासरूपविधिप्रवृत्तिः । ताच्छीलिकेषु वासरूपविधिर्नास्तीति निषेधादित्यत आह । **ताच्छीलिकेष्विति** ॥ इयम्परिभाषा 'निन्दहिंस' इत्यादिवक्ष्यमाणसूत्रे ज्ञापितेति भाष्ये स्पष्टम् । **प्रायिकमिति** ॥ एतच्च 'सूददीपदीक्षश्च' इति दीपग्रहणादिति 'जुचङ्क्रम्यदन्द्रम्य' इति सूत्रे भाष्ये स्पष्टम् । **सम्पृचानुरुधाङ्यमाङ्यस** ॥ सम्पृच, अनुरुध, आङ्यम, आङ्यस, परिसृ, संसृज, परिदेवि, सज्वर, परिक्षिप, परिरट, परिवद, परिदह, परिमुह, दुष, द्विष, द्रुह, दुह, युज, आक्रीड, विविच, त्यज, रज, भज, अतिचर, अपचर, आमुष, अभ्याहन्, एषां सप्तविंशानां द्वन्द्वात्पञ्चमी । **सम्पर्कीति** ॥ 'चजोः' इति कुत्वम् । अनुरोधीत्यादौ लघूपधगुणः । अदुपधेषु उपधावृद्धिः । **परिदेवीति** ॥ 'देवृ देवने' भ्वादिः । दीव्यतेस्तु ण्यन्तस्य न ग्रहणम् । लाक्षणिकत्वात्, अण्यन्तैस्साहचर्याच्च । **अभ्याघातीति** ॥ 'हनस्तोऽचिण्णलोः' इति तत्वम् । 'हो हन्तेः' इति कुत्वम् । **वौ कषलस** ॥ कष, लस,

विकाषी। विलासी। विकत्थी। विस्रम्भी।

३१२४। अपे च लषः। (३-२-१४४)

चाद्वौ। अपलाषी। विलाषी।

३१२५। प्रे लपसृद्रुमथवदवसः। (३-२-१४५)

प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी।

३१२६। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्। (३-२-१४६)

पञ्चम्यर्थे प्रथमा। एभ्यो वुञ्स्यात्। निन्दकः। हिंसकः, इत्यादि। ण्वुला सिद्धे वुञ्वचनं ज्ञापकं तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति।

३१२७। देविक्रुशोश्चोपसर्गे। (३-२-१४७)

आदेवकः। आक्रोशकः। 'उपसर्गे' किम्। देवयिता। क्रोष्टा।

---

कत्थ, स्रम्भ्, एषान्द्वन्द्वात्पञ्चमी। एभ्यो घिनुण् स्यात् ताच्छील्यादिष्वित्यर्थः। **अपे च लषः॥ चाद्वाविति॥** वौ उपपदेऽपीत्यर्थः। अपे वौ च उपपदे लषः घिनुण् इत्यर्थः। ताच्छील्यादिष्वेवेत्यर्थः। **प्रे लप॥** लप, सृ, द्रु, मथ, वद्, वस्, एषां षण्णान्द्वन्द्वात्पञ्चमी। प्रे उपपदे एभ्यः घिनुण् स्यात् ताच्छील्यादिष्वित्यर्थः। **निन्दहिंस॥** निन्द, हिंस, क्लिश, खाद, विनाश, परिक्षिप, परिरट, परिवादि, व्याभाष, असूय, एषां दशानां द्वन्द्वः। **पञ्चम्यर्थे प्रथमेति॥** सौत्र पुस्त्वमेकवचनं चेति भावः। विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः। शकारादकार उच्चारणार्थः। केचित्तु विनाशीति ण्यन्तमेव पठन्ति। परिवादीति तु ण्यन्तमेव। असूयेति कण्ड्वादियगन्तः। **इत्यादीति॥** क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयक। ननु 'असूयो वुञ्' इति असूयतेरेव वुञ्विधीयता, न तु निन्दादिभ्योऽपि, तेषां ण्वुलैव सिद्धेः। लित्स्वरञित्स्वरयोस्तु नास्ति विशेषः। उभयथाप्युदात्तत्वात्। असूयतेस्तु ण्वुलि प्रत्ययात पूर्वं ऊकार उदात्तः। वुञि तु 'ञ्नित्यादिर्नित्यम्' इति धातोरकार उदात्त इति विशेषः। तस्मादसूयतेरेव वुञ्विधिरिति युक्तमित्यत आह। **ण्वुला सिद्धे इति॥ तृजादयो नेतीति॥** तच्छीलादिषु वासरूपविधिसत्त्वे हि तद्विषये ण्वुलस्सरूपतया वुञा नित्यम्बाधेऽपि तृजादयः स्युः। अत्र वासरूपविध्यप्रवृत्तौ तु 'तृन्' इति सूत्रेण तच्छीलादिषु तृनि प्राप्ते वुञ्विधिरर्थवान्। अतस्तच्छीलादिषु वासरूपविधिर्न प्रवर्तत इति भावः। इदं च प्रायिकम्। तत्फलन्तु उत्पूर्वान्मदेरलङ्कृञादिसूत्रेण इष्णुजुक्तः, वासरूपविधिना घिनुणपीति मूल एवानुपदमुक्तम्। **देविक्रुशोः॥** देवीति चुरादिण्यन्तस्य 'दिवु क्रीडा' इत्यस्य च ग्रहणम्। उपसर्गे उपपदे देवयतेः क्रुशेश्च तच्छीलादिषु वुञ्

## ३१२८ । चलनशब्दार्थादकर्मकाद्युच् । (३-२-१४८)

चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । 'अकर्मकात्' किम् । पठिता विद्याम् ।

## ३१२९ । अनुदात्तेतश्च हलादेः । (३-२-१४९)

अकर्मकाद्युच्स्यात् । वर्तनः । वर्धनः । 'अनुदात्तेतः' किम् । भविता । 'हलादेः' किम् । एधिता । 'अकर्मकात्' किम् । वसिता वस्त्रम् ।

## ३१३० । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । (३-२-१५०)

'जु' इति सौत्रो धातुर्गतौ वेगे च । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । पूर्वेण सिद्धे पदग्रहणं 'लषपतपद—' (सू ३१३४) इत्युकञा बाधा मा भूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति । तेनालङ्कृञस्तृन्न ।

## ३१३१ । क्रुधमण्डार्थेभ्यश्च । (३-२-१५१)

क्रोधनः । रोषणः । मण्डनः । भूषणः ।

---

स्यादित्यर्थः । **चलन** ॥ **शब्दन इति** ॥ 'शब्द शब्दने' चुरादिः । शब्दनं शब्दोच्चारणम् । धात्वर्थोपसङ्ग्रहादकर्मकः । **अनुदात्तेतश्च** ॥ आदिग्रहणाभावे हलन्तादित्यर्थः स्यात् । ततश्च जुगुप्सनः इति न स्यात् । सन्नन्तस्य हलन्तत्वाभावात् । अस्ति चानुदात्तेत्त्व सन्नन्तस्य । गुप इत्यनुदात्तेत्त्वस्य केवले प्रयोजनाभावेन सन्नन्तार्थत्वात् । **जुचंक्रम्य-दन्द्रम्य** ॥ जु, चङ्क्रम्य, दन्द्रम्य, सृ, गृधि, ज्वल, शुच, लष, पत, पद एषान्दशानां द्वन्द्वात्पञ्चमी । एभ्यः तच्छीलादिषु युच् स्यादित्यर्थः । धातुपाठे जुधातोरदर्शनादाह । **जु इति सौत्र इति** ॥ **चङ्क्रमण इति** ॥ यङन्ताद्युच् । 'यस्य हलः' इति यकारलोप, अतो लोपः । एवन्दन्द्रमणः, सरणः, गर्द्धनः, ज्वलनः, शोचनः, लषणः, पतनः, पदनः, इत्यप्युदाहार्यम् । **पूर्वेणेति** ॥ 'अनुदात्तेतश्च हलादेः' इत्यनेनेत्यर्थः । **तेनेति** ॥ उकञ्ह्ययं तच्छीलाधिकारस्थ । तत्र वासरूपविधिनैव उकञा 'अनुदात्तेतश्च हलादे'इति विहितस्य पदेर्युचः बाधो न भविष्यतीति 'जुचङ्क्रम्य' इति युज्विधिरनर्थकः स्यात् । अतस्ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ति इति विज्ञायत इत्यर्थः । 'निन्दहिंस' इति सूत्रे तच्छीलादिषु वासरूपविधिना तृजादयो नेति ज्ञापितम् । इह तु ताच्छीलिकषु परस्परं वासरूपविधिर्नास्तीति ज्ञाप्यते इति न पौनरुक्त्यम् । **तृन्नेति** ॥ अलम्पूर्वात् कृञः अलङ्कृञित्यादिसूत्रविहितेन तच्छीलाधिकारस्थेन इष्णुचा 'तृन्' इति सामान्यविहितः तच्छीलाधिकारस्थो बाध्यते इत्यर्थः । **क्रुधमण्डार्थेभ्यश्च** ॥ 'क्रुध

## ३१३२ । न यः । (३-२-१५२)

यकारान्तान्नुञ्ज स्यात् । क्नूयिता । क्ष्मायिता ।

## ३१३३ । सूददीपदीक्षश्च । (३-२-१५३)

युञ्ज स्यात् । सूदिता । दीपिता । दीक्षिता । 'नमिकम्पि—' (सू ३१४७) इति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति प्रायिकमिति । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखा । यदि सूदेर्युञ्ज, कथं मधुसूदनः । नन्द्यादिः ।

## ३१३४ । लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् । (३-२-१५४)

लाषुकः । पातुकः इत्यादि ।

## ३१३५ । जल्पभिक्षकुट्टलुण्टवृङः षाकन् । (३-२-१५५)

जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ।

## ३१३६ । प्रजोरिनिः । (३-२-१५६)

---

कोपे' 'मडि भूषायाम्' एतदर्थेभ्य धातुभ्यो युच् स्यात् तच्छीलादिष्वित्यर्थः । **न यः** ॥ य इति पञ्चम्यन्त धातुविशेषणम् । तदन्तविधिः । तदाह । **यकारान्तादिति** ॥ **क्नूयिता । क्ष्मायितेति** ॥ 'क्नूयी शब्दे उन्दने च' 'क्ष्मायी विधूनने' 'अनुदात्तेतश्च हलादेः' इति युच् निषिध्यते । तृनेव भवति । **सूददीप** ॥ सूद, दीप, दीक्ष, एषान्द्वन्द्वात्पञ्चमी । **युज्नेति** ॥ शेषपूरणमिदम् । 'अनुदात्तेतश्च' इति प्राप्तो युच् प्रतिषिध्यते । नन्विह दीपग्रहण व्यर्थम् । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति विशेषविहितेन रप्रत्ययेन युचो बाधसिद्धे । नच वासरूपविधिना तद्बाध शङ्क्य । ताच्छीलिकेषु वासरूपविधे प्रतिषेधादित्यत आह । **नमिकम्पीति रेणेति** ॥ रप्रत्ययेनेत्यर्थ । **प्रायिकमिति** ॥ तथा चात्र वासरूपविधिना ताच्छीलिकेनापि रप्रत्ययेन युचो बाधासम्भवात् इह दीपेर्युचो निषेधोऽर्थवानिति भावः । **तेनेति** ॥ ताच्छीलिकेऽपि क्वचिद्वासरूपविधेस्सत्त्वादित्यर्थः । **कम्रा कमनेति** ॥ इच्छाशीलेत्यर्थः । 'अनुदात्ततश्च' इति युच 'नमिकम्पि' इति रेण पक्षे बाध इति भावः । **कम्प्रा, कम्पनेति** ॥ चलनशीलेत्यर्थ । अत्र पि 'नमिकम्पि' इति रेण युच पक्षे बाध इति भावः । आक्षिपति । **यदीति** ॥ 'सूददीपदीक्षश्च' इति सूदर्युच्प्रतिषिध्यते तदा मधुसूदन इति कथमित्यन्वयः । समाधत्ते । **नन्द्यादिरिति** ॥ सूदिरिति शेष । तथाच 'नन्दिग्राह' इति ल्युप्रत्यय इति भावः । **लषपत** ॥ एभ्यो दशभ्यः उकञ् स्यात् तच्छीलादिष्वर्थेषु । **इत्यादीति** ॥ पादुकः । आतो युक्, स्थायुकः । भावुकः, वर्षुक, घातुक 'हनस्तः' इति तत्वम् । हो हन्ते' इति कुत्वम् । कामुक, गामुक, शारुकः । **जल्पभिक्ष** ॥ एभ्यः पञ्चभ्यष्षाकन् स्यात् । तच्छीलादिष्वित्यर्थः । षनावितौ । स्त्रियां षित्त्वान्ङीष् । जल्पाकः, इत्यादि । **प्रजोरिनिः** ॥

प्रजवी—प्रजविनौ—प्रजविनः ।

**३१३७ । जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । (३-२-१५७)**

जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

**३१३८ । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । (३-२-१५८)**

आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वो द्रा, तदो नान्तत्वं निपात्यते । तन्द्रालुः । श्रद्धालुः । 'शीङो वाच्यः' (वा २१४०) । शयालुः ।

**३१३९ । दाधेट्सिशदसदो रुः । (३-२-१५९)**

दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ।

**३१४० । सृघस्यदः क्मरच् । (३-२-१६०)**

सृमरः । घस्मरः । अद्मरः ।

**३१४१ । भञ्जभासमिदो घुरच् । (३-२-६१)**

---

जुस्सौत्रो धातुः । प्रपूर्वादस्मात् इनिप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थः । नकारादिकार उच्चारणार्थः । **जिदृक्षि** ॥ जि, दृ, क्षि, विश्रि, इण्, वम, अव्यथ, अभ्यम, परिभू, प्रसू, एषां दशानां द्वन्द्वः । 'जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायां' विपूर्वः । 'इण् गतौ, वमु उद्गिरणे, व्यथ भयसञ्चलनयोः' नञ्पूर्वः । निपातनात् नञो धातुना समासे 'न लोपो नञः' इति नकारलोपः । 'अम गत्यादिषु' अभिपूर्वः । 'भू सत्तायाम्' परिपूर्वः । 'षू प्रेरणे' प्रपूर्वः । एभ्यः इनिः स्यात्तच्छीलादिष्वित्यर्थः । सूति-सूयत्योस्तु सानुबन्धकत्वात् नेह ग्रहणम् । **स्पृहिगृहि** ॥ स्पृहि, गृहि, पति, दयि, निद्रा, तन्द्रा, श्रद्धा, एभ्यः सप्तभ्यः आलुच् स्यात्तच्छीलादिष्वित्यर्थः । **स्पृहयालुरिति** ॥ स्पृह-धातोरदन्तादालुच् । 'अयामन्त' इति णेरय्, णिलोपापवादः । अल्लोपस्य स्थानिवत्त्वान्न लघूपधगुणः । एवं गृहयालुः । पतयालुरित्यत्र तु अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । **निद्रालुरिति** ॥ 'द्रा कुत्सायाङ्गतौ' निपूर्वादालुच् । **तत्पूर्वोद्रेति** ॥ तच्छब्दपूर्वो द्राधातुः तन्द्रेत्यनेन गृह्यत इत्यर्थः । **श्रद्धालुरिति** ॥ श्रदित्यव्ययम्, तत्पूर्वात् धाधातोरालुच् । **शीङो वाच्य इति** ॥ आलुजिति शेषः । **दाधेट्** ॥ दा, धेट्, सि, शद्, सद्, एषां द्वन्द्वात्पञ्चमी । एभ्यो रुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । **सृघस्यदः** ॥ सृ, घसि, अद्, एषां द्वन्द्वात्पञ्चमी । घसिः प्रकृत्यन्तरम् । **भञ्जभास** ॥ भञ्ज, भास, मिद्, एषां द्वन्द्वात्

भङ्गुरः । भासुरः । मेदुरः ।

### ३१४२ । विदिभिदिच्छिदेः कुरच् । (३-२-१६२)

विदुरः । भिदुरम् । छिदुरम् ।

### ३१४३ । इण्नशिजिसर्तिभ्यः क्वरप् । (३-२-१६३)

इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

### ३१४४ । गत्वरश्च । (३-२-१६४)

गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी ।

### ३१४५ । जागुरूकः । (३-२-१६५)

जागर्तेरूकः स्यात् । जागरूकः ।

### ३१४६ । यजजपदशां यङः । (३-२-१६६)

एभ्यो यङन्तेभ्य ऊकः स्यात् । दशामिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ।

### ३१४७ । नमिकम्पिस्म्यजसकमहिंसदीपो रः । (३-२-१६७)

---

पञ्चमी । एभ्यः घुरच् स्यात् तच्छीलादिष्वित्यर्थः । घचावितौ । **भंगुर इति** ॥ 'चजोः' इति कुत्वम् । **विदिभिदि** ॥ तच्छीलादिष्वित्येव । विदेर्ज्ञानार्थस्यैव ग्रहणम्, नतु लाभार्थस्य, व्याख्यानादित्याहुः । विदुर इत्यादौ कित्त्वान्न लघूपधगुणः । **इण्नशिजि** ॥ इण्, नशि, जि, सृ, एभ्यः क्वरप् स्यात् तच्छीलादिष्वित्यर्थः । कित्त्वान्न गुणः । पित्त्वन्तु तुगर्थम् । **गत्वरश्च** ॥ **गमेरिति** ॥ गमेः क्वरप् अनुनासिकलोपश्च निपात्यते इत्यर्थः । झलादिप्रत्ययपरकत्वाभावादनुनासिकलोपस्याप्राप्तिः । पित्त्वात्तुक् । **गत्वरीति** ॥ 'टिड्ढ' इति ङीप् । **जागुरूकः** ॥ जागृ इत्यस्य जागुरिति पञ्चम्यन्तम्पदम् । तदाह । **जागर्तेरिति** ॥ तच्छीलादिष्वित्येव । **जागरूक इति** ॥ ऋकारस्य गुणः, रपरत्वं । सिद्धरूपन्तु न निपातितम्, उत्तरसूत्रे ऊक इत्यननुवृत्तिप्रसङ्गात् । **यजजपदशां यङः** ॥ यज, जप, दश, एषां त्रयाणां द्वन्द्वः । पञ्चम्यर्थे षष्ठी । तदाह । **एभ्य इति** ॥ तच्छीलादिष्वित्येव । ननु दंशेर्नोपधत्वात् कथन्दशामिति निर्देश इत्यत आह । **भाविनेति** ॥ ऊके कृते सति भविष्यतो नलोपस्यात्र निपातनमिति यावत् । **यायजूक इति** ॥ 'यस्य हलः' इति यलोपः । 'अतो लोपः, दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । **जञ्जपूक इति** ॥ 'जपजभदहदशभञ्जपशां च' इत्यभ्यासस्य नुक् । एवन्दन्दशूकः । निपातनान्नकारलोपः । **नमिकम्पि** ॥ नमि, कम्पि, स्मि, अजस, कम, हिंस, दीप्, एषान्द्वन्द्वात्पञ्चम्येकवचनम् । एभ्यस्सप्तभ्यो रप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थः । अजसधातोः धातुपाठे अदर्शनात् आह ।

नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम्, सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ।

### ३१४८ । सनाशंसभिक्ष उः । (३-२-१६८)

चिकीर्षुः । आशंसुः । भिक्षुः ।

### ३१४९ । विन्दुरिच्छुः । (३-२-१६९)

वेत्तेर्नुम् इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ।

### ३१५० । क्याच्छन्दसि । (३-२-१७०)

'देवाञ्जिगाति सुम्नयुः' ।

### ३१५१ । आदृगमहनजनः किकिनौ लिट् च । (३-२-१७१)

आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । पपिः सोमम् । ददिर्गाः । बभ्रिर्वज्रम् । जग्मिर्युवा । 'जघ्निर्वृत्रममित्रियम्' जज्ञिः । 'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' (वा २१४४) दधिः । चक्रिः ।

---

**जसिर्नञ्पूर्व इति** ॥ 'जसु मोक्षणे' अयन्नञ्पूर्वश्शक्तिम्वभावात् क्रियासातत्ये वर्तते इत्यर्थः । निपातनाद्धातुना नञः समासे 'नलोपो नञः' इति नलोपः । **सनाशंस** ॥ सन्, आशस, भिक्ष, एषान्त्रयाणान्द्वन्द्वात्पञ्चम्येकवचनम् । सनिति सन्प्रत्ययान्तं गृह्यते । 'षणु दाने, षण सम्भक्तौ' इत्यनयोस्तु न ग्रहणम् । गर्गादिषु विजिगीषुशब्दपाठाल्लिङ्गात् । एभ्यः उप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थ । **आशंसुरिति** ॥ 'आङः शासु इच्छायाम्' इत्यस्मादुः । **विन्दुरिच्छुः** ॥ **वेत्तेरिति** ॥ 'विद ज्ञाने' इत्यस्मादुप्रत्यये प्रकृतेर्नुमागमः । 'इषु इच्छायाम्' इत्यस्मादुप्रत्यये षकारस्य छत्वञ्च निपात्यते इत्यर्थ । **वेत्तीति** ॥ धातुप्रदर्शनम् । **तच्छील इति** ॥ वेदनशील इत्यर्थः । **इच्छतीति** ॥ 'इषु इच्छायाम्' इति धातुप्रदर्शनम् । **इच्छुरिति** ॥ एषणशील इत्यर्थः । **क्याच्छन्दसि** ॥ क्यप्रत्ययान्तादुप्रत्ययः स्यात् तच्छीलादिषु छन्दसीत्यर्थः । **सुम्नयुरिति** ॥ सुम्नं सुखम् । तदात्मन इच्छतीत्यर्थे सुम्नशब्दात् क्यच् । 'न च्छन्दस्यपुत्रस्य' इति निषेधात् 'क्यचि च' इति ईत्वम्, 'अकृत्सार्व' इति दीर्घश्च न । सुम्नयुरिति क्यजन्तादुप्रत्ययः, आतो लोप । **आदृगम** ॥ आत्, ॠ, गम, हन, जन, एषान्द्वन्द्वात्पञ्चमी । लिट्चेति व्याचष्टे । **तौ च लिड्वदिति** ॥ कि किन् अनयोर्द्वन्द्वः । तच्छीलादिष्वित्येव । **पपिरिति** ॥ पाधातोः किः, द्वित्वादि, आल्लोपः । **ददिरिति** ॥ दाधातोः किः, द्वित्वादि । **बभ्रिर्वज्रमिति** ॥ भृञ. कि, द्वित्वादि । **जघ्निरिति** ॥ हनः किः, द्वित्वादि । 'गमहन' इत्युपधालोपः । 'हो हन्तेः' इति कुत्वम् । **जज्ञिरिति** ॥ जनेः किः, द्वित्वादि । एवं किन्यपि बोध्यम् । स्वरे विशेषः । छान्दसमप्येतत्सूत्रद्वयम्भाषायामित्यादिवक्ष्यमाणवार्तिकविवेचनाय

सस्निः । जग्मिः । जज्ञिः । नेमिः । 'सासहिवावहिचाचलिपापतीनामुपसङ्ख्यानम्' (वा २१४४) । यङन्तेभ्यः सहत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ।

## ३१५२ । स्वपितृषोर्नजिङ् । (३-२-१७२)

स्वप्नक् । तृष्णक्, तृष्णजौ, तृष्णजः । 'धृषेश्चेति वाच्यम्' इति काशिकादौ । धृष्णक् ।

## ३१५३ । शॄवन्द्योरारुः । (३-२-१७३)

शरारुः । वन्दारुः ।

## ३१५४ । भियः क्रुक्लुकनौ । (३-२-१७४)

भीरुः । भीलुकः । 'क्रुकन्नपि वाच्यः' (वा २१४५) । भीरुकः ।

## ३१५५ । स्थेशभासपिसकसो वरच् । (३-२-१७५)

स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

## ३१५६ । यश्च यङः । (३-२-१७६)

---

इहोपन्यस्तम् । **भाषायामिति** ॥ वार्तिकमिदम् । धाञ्, कृ, सृ, गमि, जनि, नमि, एभ्यष्षड्भ्यः किकिनौ, तौ च लिड्वदिति वक्तव्यमित्यर्थः । **दधिरित्यादि** ॥ किकिनोः कृतयोः द्वित्वादि यथासम्भवं ज्ञेयम् । **नेमिरिति** ॥ नमेः किः । द्वित्वम्, एत्त्वाभ्यासलोपौ । **सासहीति** ॥ सहेर्यङि द्वित्वादौ 'दीर्घोऽकितः' इति दीर्घे, किकिनोः कृतयोः 'यस्य हलः' इति यकारलोपे अतो लोपे सासहीति निर्देशः । एव वहेः चलेः पतेश्च यङन्तस्य किकिनन्तस्य निर्देशः । एषान्निपातनस्य उपसङ्ख्यानमित्यर्थः । तदाह । **यङन्तेभ्यस्सहत्यादिभ्य इति** ॥ **नीगभाव इति** ॥ 'नीग्वञ्चु' इति प्राप्तस्य नीगागमस्याभाव इत्यर्थः । **स्वपितृषोर्नजिङ्** ॥ पञ्चम्यर्थे षष्ठी । स्वपेः तृषेश्च, नजिङ् स्यात् तच्छीलादिष्वित्यर्थः । जकारादिकार उच्चारणार्थः । ङकार इत् । **स्वप्नगिति** ॥ स्वपनशील इत्यर्थः । स्वप्नजौ—स्वप्नजः । एव तृष्णक्, तर्षणशील इत्यर्थः । **धृषेश्चेति** ॥ नाजिङिति शेषः । **काशिकादाविति** ॥ भाष्ये तु न दृश्यते इति भावः । **शॄवन्द्योरारुः** ॥ पञ्चम्यर्थे षष्ठी । 'शॄ हिंसायाम्' 'वदि अभिवादनस्तुत्योः' आभ्याम् आरुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । **भियः** ॥ भीधातोः क्रु क्लुकन् एतौ स्तः । तच्छीलादिष्वित्यर्थः । कित्त्वान्न गुणः । **स्थेश** ॥ 'ष्ठा गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ' एभ्यः वरच् स्यात्तच्छीलादिष्वित्यर्थः । ईश्वरीति तु पुंयोगे ङीष् । **यश्च यङः** ॥ 'या प्रापणे' इत्यस्य धातोरनुकरणस्य या इत्यस्य

यातेर्यङन्ताद्वरच् स्यात् । 'अतो लोपः' (सू २३८०) तस्य 'अचः परस्मिन्—' (सू ५०) इति स्थानिवद्भावे प्राप्ते न पदान्त इति सूत्रेण यलोपं प्रति स्थानिवद्भावनिषेधात् 'लोपो व्योः—' (सू ८७३) इति यकारलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते 'वरे लुप्तं न स्थानिवत्' । यायावरः ।

## ३१५७ । भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् । (३-२-१७७)

विभ्राट् । भाः—भासौ । धूः—धुरौ । विद्युत् । ऊर्क् । पूः—पुरौ । दृशिग्रहणस्याप्यपकर्षाज्जवतेर्दीर्घः । जूः—जुवौ—जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ।

---

यः इति षष्ठ्यन्तम् । तदाह । **यातेरिति** ॥ याधातोर्यङ्, द्वित्वादि 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः, यायाय इति यङन्ताद्वरचि विशेषमाह । **अतो लोप इति** ॥ हलः परत्वाभावात् 'यस्य हलः' इति यकारलोपो न । यायाय् वर इति स्थिते आह । **लोपो व्योरिति यकारलोप इति** ॥ ननु अतो लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् अकारेण व्यवधानात् वल्परत्वाभावात् कथमिह यलोप इत्यत आह । **तस्येति** ॥ तस्य अल्लोपस्य यलोपे कर्तव्ये 'न पदान्त' इति स्थानिवत्त्वनिषेधादित्यर्थः । एवञ्च यङोऽकारस्य यकारस्य च लोपे यायावर इत्यत्र 'आतो लोप इटि च' इत्याल्लोपमाशङ्क्य निराकरोति । **अल्लोपस्येति** ॥ यङकारलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वमाश्रित्य तदकारात्मकार्धधातुकपरत्वात् आकारस्य 'आतो लोप इटि च' इत्याल्लोपे प्राप्ते सति परिहार उच्यते इत्यर्थः । परिहारमेवाह । **वरे लुप्तन्न स्थानिवदिति** ॥ लुप्तमिति भावे क्तः । 'न पदान्त' इति सूत्रे वरे इत्यनेन वरे परे विहितन्न स्थानिवदिति लभ्यते । अल्लोपोऽयमार्धधातुके परे विहितः । अतः तस्य स्थानिवत्त्वाभावान्न यङोऽकारमाश्रित्य 'आतो लोप इटि च' इत्यस्य प्रवृत्तिरित्यर्थः । एवञ्च 'न पदान्त' इति सूत्रे वरे इत्यशस्य यलोपे इत्यशस्य च यायावर इत्युदाहरणमिति बोध्यम् । **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः** ॥ भ्राज, भास, धुर्वी, द्युत, ऊर्जि, पॄ, जु, ग्रावस्तु, एभ्योऽष्टभ्यः क्विप्स्यात् तच्छीलादिषु कर्तृष्वित्यर्थः । **विभ्राडिति** ॥ 'व्रश्च' इति षः । **भा इति** ॥ भासेः क्विपि सकारान्तस्य रुत्वविसर्गौ । **धूरिति** ॥ धुर्वीधातोः क्विप् । 'राल्लोप' इति वकारस्य लोपः । धुर् इति रेफान्तम् । सुलोपः । 'र्वोरुपधायाः' इति दीर्घः । **पूरिति** ॥ पॄधातोः क्विप् । 'उदोष्ठ्य' इत्युत्त्वम्, रपरत्वम् । पुर् इति रेफान्तम्, सुलोपे 'र्वोः' इति दीर्घः । जुधातोः क्विपि दीर्घं साधयितुमाह । **दृशिग्रहणस्याप्यपकर्षादिति** ॥ उत्तरसूत्रादिति भावः । अत्र व्याख्यानमेव शरणम् । ननु ग्रावस्तु इति कथं समस्तनिर्देशः । सुबन्तस्य ग्रावशब्दस्य धातुना समासासम्भवादित्यत आह । **ग्रावशब्दस्येति** ॥

## ३१५८। अन्येभ्योऽपि दृश्यते। (३-२-१७८)

क्विप्। छित्। भिद्। दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः, क्वचिदसम्प्रसारणं, क्वचिद्द्वे, क्वचिद्ध्रस्वः। तथा च वार्तिकम्। 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च' (वा २१४७—४८)। क्विब्वचीत्यादिनोणादिसूत्रेण केषाञ्चित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम्। वक्तीति वाक्। पृच्छतीति प्राट्। आयतं स्तौति आयतस्तूः। कटं प्रवते कटप्रूः। जुरुक्तः। श्रयति हरिं श्रीः। 'द्युतिगमिजुहोतीनां द्वे च' (वा २१४९)। दृशिग्रहणादभ्याससंज्ञा। दिद्युत्। जगत्। 'जुहोतेर्दीर्घश्च' (वा २१४९)। जुहूः। 'दॄ भये'। अस्य ह्रस्वश्च। दीर्यति। दद्रत्। 'ध्यायतेः सम्प्रसारणञ्च' (वा २१५१)। धीः।

## ३१५९। भुवः संज्ञान्तरयोः। (३-२-१७९)

मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः।

---

**ग्रावस्तुदिति** ॥ पित्त्वात्तुक्। **अन्येभ्योऽपि** ॥ **क्विबिति** ॥ शेषपूरणमिदम्। भ्राजभास इत्यादिसूत्रोपात्तापेक्षया अन्येभ्योऽपि धातुभ्य तच्छीलादिषु कर्तृषु क्विप् दृश्यते इत्यर्थः। **विध्यन्तरेति** ॥ विधीयते इति विधि, कार्य, कार्यान्तरोपसङ्ग्रहार्थमित्यर्थ। तदेव दर्शयति। **क्वचिद्दीर्घ इत्यादि** ॥ **क्विब्वचीत्यादिनेति** ॥ 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणा दीर्घोऽसम्प्रसारणञ्च' इत्यौणादिकसूत्रेणेत्यर्थः। **तृना बाधा मा भूदिति** ॥ वासरूपविधिस्तु ताच्छीलिकेषु नेति भाव। **वागिति** ॥ वचधातो क्विप्। वचनात् उपधाया दीर्घः। 'वचिस्वपि' इति सम्प्रसारणाभावश्च। एव कटप्रूरित्यत्र दीर्घ। **प्राडिति** ॥ वचनान्न सम्प्रसारणम्। **जुरुक्त इति** ॥ 'भ्राजभास' इत्यत्रेति शेष। अतोऽत्र तद्ग्रहणम्मास्त्विति भावः। **श्रीरिति** ॥ श्रिञ क्विपि दीर्घ। **द्युनीति** ॥ 'द्युतिगमिजुहोत्यादीनान्द्वित्व क्विप्च' इति वाच्यमित्यर्थ। 'पूर्वोऽभ्यासः' इत्यत्र षाष्ठद्विर्वचन एव पूर्वखण्डस्याभ्याससज्ञावचनादाह। **दृशिग्रहणादिति** ॥ 'अन्येभ्योऽपि दृश्यते' इत्यत्रेत्यर्थः। ततश्चाभ्यासकार्यं हलादिशेषादीति भावः। **दिद्युदिति** ॥ 'द्युतिस्वाप्यो.' इति सम्प्रसारणम्। **जगदिति** ॥ गमे. क्विप् 'गमः क्वौ' इति मलोपे तुक्। **जुहोतेर्दीर्घश्चेति** ॥ वार्तिकमिदम्। चात्क्विप्द्वित्वे। **ह्रस्वश्चेति** ॥ वार्तिकमिदम्। **दद्रदिति** ॥ ह्रस्वे कृते तुक्। **ध्यायतेरिति** ॥ वार्तिकमिदम्। चात् क्विप्। **धीरिति** ॥ ध्यैधातोः क्विपि सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घ इति भावः। अत्र 'ध्यायतेस्सम्प्रसारणञ्च' इत्युणादिषु पठितत्वादिद वार्तिकं मास्त्वित्याहुः। वस्तुतस्तु उणादिसूत्राणि न पाणिनीयानि किन्तु ऋष्यन्तरप्रणीतानीति वक्ष्यन्ते, अतो न पौनरुक्त्यशङ्का। **भुवः संज्ञान्तरयोः** ॥ क्विबिति शेषः। संज्ञान्तरयोरेवेति नियमार्थं सूत्रम्। संज्ञाया-

## ३१६० । विप्रसम्भ्यो ड्वसंज्ञायाम् । (३-२-१८०)

एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् । 'मितद्र्वादिभ्य उपसङ्ख्यानम्' (वा २१५२) । मितं द्रवतीति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ।

## ३१६१ । धः कर्मणि ष्ट्रन् । (३-२-१८१)

धेटो धाञश्च कर्मण्यर्थे ष्ट्रन्स्यात् । षो ङीषर्थः । 'धात्री जनन्यामलकी-वसुमत्युपमातृषु' ।

## ३१६२ । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । (३-२-१८२)

दाबादेः ष्ट्रन्स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ।

## ३१६३ । तितुत्रतथसिसुसरकसेषु च । (७-२-९)

एषां दशानां कृत्प्रत्ययानामिण्न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम । दंष्ट्रा । नद्ध्री ।

---

मुदाहरति । **मित्रभूर्नामेति** ॥ अन्तरे उदाहरति । **धनिकेत्यादि** ॥ यावद्द्रव्यभाविन्यः संज्ञाः । प्रतिभूशब्दस्तु सत्येव पुरुषे कदाचिन्न भवति । ऋण प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः । **विप्रसम्भ्यः** ॥ डु असञ्ज्ञायामिति छेद । **विभुरिति** ॥ डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । **सम्भुरिति** ॥ सभवति उत्पादयतीति सम्भु । तदाह । **जनितेति** ॥ **मित-द्र्वादिभ्य इति** ॥ मितद्र्वादिसिद्ध्यर्थ डुप्रत्ययस्य उपसङ्ख्यानमित्यर्थः । **शम्भुरिति** ॥ श सुख भवति उत्पादयतीत्यर्थः । तदेवोपपादयति । **अन्तर्भावितेति** ॥ **धः कर्मणि ष्ट्रन्** ॥ धेटः कृतात्वस्य धाञश्च ध इति पञ्चम्यन्तम् । तदाह । **धेट इत्यादि** ॥ षकारात् तकारस्य ष्टुत्वसम्पन्नटकारेण निर्देशः, षस्य इत्सञ्ज्ञाया लोपे सति ष्टुत्वसम्पन्नस्य निवृत्तिः । तदाह । **धात्रीत्यादि** ॥ **दाम्नी** ॥ दाप्, नी, शस, यु, युज, स्तु, तुद, सि, सिच, मिह, पत, दश, नह, एषां त्रयोदशानां द्वन्द्वः । 'दाप् लवने' इत्यस्य पकारस्य स्थाने 'यरोऽनु' इति कृतमकारस्य निर्देशः । अत्र शसेः पतेश्च त्रप्रत्यये इटमाशङ्क्य आह । **तितुत्रत** ॥ ति, तु, त्र, त, थ, सि, सु, सर, क, स, एषा दशानां द्वन्द्वः । अत्र सरेत्येकम् । ति, तन्तिः, 'स्त्रियाम्' इति क्तिन् । तु, सक्तुः, 'तनिगमि' इत्यादिना तुप्रत्ययः । त्र, शस्त्रम्, पत्त्रम् । 'दाम्नी' इति त्रप्रत्ययः । त, हस्तः । औणादिकः तप्रत्ययः । क्तप्रत्यये तु हसितमित्येव । थ कुष्ठम् । औणादिकः क्थप्रत्ययः । सि कुक्षिः । कुषेरौणादिकः क्सिप्रत्ययः । सु, इक्षुः, इषेरौणादिकः क्सुप्रत्ययः । सर, अक्षरम्, अशेस्सरन् । क, शल्कः, शलेः कः । स, वत्सः, वदेः सः । **मेढ्रमिति** ॥ 'मिह सेचने' त्रः । ढत्वधत्वष्टुत्वढलोपाः ।

## ३१६४। हलसूकरयोः पुवः। (३-२-१८३)

पूङ्पूञोः करणे ष्ट्रन्स्यात्। तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रम्। मुखमित्यर्थः।

## ३१६५। अर्तिलूधूसूखनसहचर इत्रः। (३-२-१८४)

अरित्रम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

## ३१६६। पुवः संज्ञायाम्। (३-२-१८५)

पवित्रम्। येनाज्यमुत्पूयते, यच्चानामिकावेष्टनम्।

## ३१६७। कर्तरि चर्षिदेवतयोः। (३-२-१८६)

पुव इत्रः स्यात् ऋषौ करणे, देवतायां कर्तरि। ऋषिर्वेदमन्त्रः। तदुक्तमृषिणेति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायां तु 'अग्निः पवित्रं स मा पुनातु'।

इति पूर्वकृदन्तप्रकरणम्।

---

**दंष्ट्रेति** ॥ दशधातोः त्रः। क्डित्प्रत्ययाभावान्नलोपो न। सूत्रे दशेति शपा निर्देशात् 'दंश-सञ्ज' इति नलोप। केचित्तु दशेत्यकार उच्चारणार्थ.। नलोपनिर्देशात् क्वचिदन्यस्मिन्नपि प्रत्यये अकङित्यपि नलोप इति दशना दन्ता इत्याहुः। **नद्ध्रीति** ॥ नह्यते अनयेति विग्रहः। चर्मरज्जुः। 'नह बन्धने' त्रः। 'नहो ध' 'झषस्तथो:' इति तस्य धः। षित्त्वान्ङीष्। **हलसूकरयोः पुवः** ॥ **पोत्रमिति** ॥ 'नितुत्रतथसिसुसर' इति नेट्। **अर्तिलूधू** ॥ अर्ति, लू, धू, सू, खन, सह, चर, एषा सप्ताना द्वन्द्वात्पञ्चमी। **पुवः संज्ञायाम्** ॥ इत्र इति शेषः। करणे इत्येव। **पवित्रमिति** ॥ पूयते अनेनाज्यमिति विग्रहः। तदाह। **येनाज्यमिति** ॥ पूयते आचमनोदकादिकमनेनेति विग्रह मत्वा आह। **यच्चा-नामिकेति** ॥ अनामिका उपकनिष्ठिकाङ्गुलिः। **कर्तरि च** ॥ **पवित्रमिति** ॥ पावमान्यादि सूक्तम्। **अग्निः पवित्रमिति** ॥ पुनातीत्यर्थः। सामान्याभिप्रायमेकवचन नपुसकत्वञ्च ॥

इति श्रीमद्वासुदेवदीक्षितविरचिताया सिद्धान्तकौमुदीव्याख्याया श्रीबालमनोरमाख्यायां तृतीयाध्यायस्य द्वितीयपादे पूर्वकृदन्तप्रकरण समाप्तम्।

॥ श्रीरस्तु ॥

# ॥ अथोणादयः ॥

१ । **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** । करोतीति कारुः, शिल्पी कारकश्च । 'आतो युक्–' (सू २७६१) । वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुः औषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः

---

अथ उणादिप्रारम्भ —'कृवापाजि' इत्यादीन्युणादिसूत्राणि मूले प्रौढमनोरमायाञ्च स्फुट व्याख्यातानि। तत्र न किञ्चिद्व्याख्यातव्यमुपलभ्यते । तानि चेमान्युणादिसूत्राणि शाकटायनमुनिप्रणीतानि, नतु पाणिनिना प्रणीतानि इति 'उणादयो बहुळम्' इति सूत्रभाष्ये 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इति वार्तिकव्याख्यानावसरेऽभिहितम् । 'उणादीनां शास्त्रान्तरपठिनाना साधुत्वाभ्यनुज्ञानार्थ बहुळग्रहणम्' इति कैयट । न ह्येषाम्पाणिनीयत्वे शास्त्रान्तरशब्दो युज्यते । उणादिप्रत्ययान्ताश्शब्दा पाणिनिमते अव्युत्पन्ना एव । अत एव 'आयनेयी' इति सूत्रे "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेस्सिद्धमुणादयो ह्यव्युत्पन्नानि प्रातिपदिकानि" इति भाष्ये उक्तम् । अत एव च "'आदेशप्रत्यययोः' इति सूत्रभाष्ये उणादयो ह्यव्युत्पन्नानि प्रातिपदिकानि इत्युक्त्वा तर्हि सर्पिषा यजुषेत्यादौ अप्रत्ययत्वात् षत्वाभावमाशङ्क्य बहुळग्रहणात् प्रत्ययसञ्ज्ञामवलम्ब्य षत्व साधितम् । व्युत्पत्तिपक्षश्च निराकृतः । अतोऽप्युणादिसूत्राणान्न पाणिनीयत्वम् । अत एव 'अजेर्व्यघञपोः' इति सूत्रभाष्ये अजधातोर्युप्रत्यये प्रकृतेर्वीभावे वायुशब्दो व्युत्पादित । उणादिसूत्राणां पाणिनीयत्वे हि 'कृवापाजि' इत्युणादिसूत्रेण उप्रत्ययमाश्रित्यैव व्युत्पद्येत । एवञ्च क्वचिद्भाष्ये उणादीना व्युत्पन्नत्वाश्रयण शास्त्रान्तरमूलकमेव इति शब्देन्दुशेखरे प्रपञ्चितम् । तथा च 'क्विब्वचिप्रच्छयायतस्तुकटप्रुजुश्रीणा' इत्युणादिसूत्राणां तथाविधवार्तिकानाञ्च न पौनरुक्त्यशङ्का ॥*

**कृवापा** ॥ "कारुः शिल्पिनि कारके" इति धरणिकोशमभिप्रेत्याह । **कारुरित्यादि** ॥ आद्ये योगरूढिः । द्वितीये तु योगमात्रमिति विवेकः । अत एव द्वितीये धात्वर्थे प्रति कारकान्वयो भवत्येव । तथा च भट्टिः । "राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः । सर्ववानरसेनानामाश्वागमनमादिशत्" इति। पायुः पुंसि । 'गुदन्त्वपान पायुर्ना' इत्यमर । पिबत्यनेन तैलादिकमिति विग्रहः । पाति रक्षतीति विग्रहे रक्षकोऽपि । तथा च मन्त्रः । 'भुवस्तस्य स्वतवाः पायुरग्ने' इति । 'स्वतवान्पायौ' इति रुत्वम् । **जायुरिति** ॥ 'भेषजौषधभैषज्यान्यगदो जायुरित्यपि' इत्यमरः । साहचर्यात्पुंस्त्वम् । 'मायुः पित्तं कफः श्लेष्म' इत्यमरः ।

---

* उणादिषु बालमनोरमाप्रणेतुर्वासुदेवदीक्षितस्याभिप्रायानुसारेण प्रौढमनोरमा मुद्रयते ।

पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । 'आशुर्व्रीहिः पाटलः स्यात्' ।

२ । **छन्दसीणः** । 'मा न आयौ' ।

३ । **दृसनिजनिचरिचटिभ्यो ञुण** । दीर्यत इति दारु । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । जानु—जानुनी । इह 'जनिवध्योश्च' (सू २५१२) इति न निषेधः । अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये 'चटु' इत्यपि ।

४ । **किञ्जरयोः श्रीणः** । किं शृणातीति किंशारुः सस्यशूकं, बाणश्च । जरामेति जरायुर्गर्भाशयः । 'गर्भाशयो जरायुः स्यात्' ।

५ । **त्रो रश्च लः** । तरन्त्यनेन वर्णा इति तालु ।

६ । **कृके वचः कश्च** । कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ।

---

शब्दोऽपि मायुः । 'यत्पशुर्मायुमकृत गोमायुरेको अजमायुरेक' इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यानात् । स्वदते रोचते इति स्वादुः । विशेष्यनिघ्नोऽयम् । एव साधुरपि । **आशु शीघ्रमिति** ॥ विलम्बाभावमात्रपरत्वे क्लीब, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम् । अथ शीघ्रमित्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषा भेद्यगामि यत्' इत्यमरः । व्रीहौ तु पुंस्येव । **छन्दसीणः** ॥ उणनुवर्तते । **मा न आयाविति** ॥ आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः । अत एव 'त्वामग्ने प्रथममायुमायवे । मानस्तोक' इत्यादिमन्त्रेषु वदभाष्ये तथैव व्याख्यातम् । अर्वाचीनास्तु 'छन्दसीण.' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तते इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्त व्याचख्युः । 'वायुना जगदायुर्वा' इति वर्णविवेकः । 'एतेर्णिच्च' इत्युप्रत्ययः । सकारान्तो वक्ष्यमाण आयुश्शब्दस्तु लोकवेदयोर्निर्विवाद एव । अत एव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुषम्' इति प्रयोगः । कथन्तर्हि, 'मा वधिष्ट जटायु माम्' इति भट्टिः । 'तटी विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दश्चेति चेत् । अर्वाचीनमते तावद्भद्रमेव । वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः । मृगय्वादित्वात् कु । आयातीत्यायुः । 'जटायुषा जटायुश्च विद्यादायुन्तथायुषा' इति द्विरूपकोशः । **चाट्विति** ॥ 'चटु चाटु प्रिय वाक्यम्' इति हट्टचन्द्रः । "चाटु चाकृतकसम्भ्रममासाङ्कार्मणत्वमगमद्रमणेषु" इति माघ । 'चाटुर्नरि प्रियोक्ति स्यात्' इति रत्नमालाकोशः । नरि पुसि । 'चकर च बहुचाटून् प्रौढयोषिद्वदस्य' इति माघ' । इह सूत्रे रहिमपि पठित्वा राहुरित्येके । बाहुलकादिति तु बहवः । **सस्येति** ॥ 'किशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः । **त्रो रश्च लः** ॥ त्र इति तरतेः षष्ठ्या निर्देशः । केचित्तु त्रारिति च्छित्वा ऋधातोरपि प्रश्लेषात् इयर्ति अर्यते वा आलुः । शाकविशेषो घटी

७ । **भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः** । भरति बिभर्ति वा भरुः, स्वामी हरश्च । म्रियन्तेऽस्मिन्भूतानि मरुर्निर्जलदेशः । शेते शयुः अजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । तन्यते कर्मपाशोऽनया इति तनुः, शरीरञ्च । 'स्त्रियां मूर्तिस्तनुस्तनूः' । धनुः शस्त्रविशेषः । 'धनुना च धनुर्विदुः' । 'धनुरिवाजनि वक्रः' इति श्रीहर्षः । मयुः किन्नरः । 'मद्गुः पानीयकाकिका' इति रभसः । न्यङ्क्वादित्वात्कुत्वं, जश्त्वेन सस्य दः ।

८ । **अणश्च** । 'लवलेशकणाणवः' चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटति वदतीति वटुः ।

९ । **धान्ये नित्** । धान्ये वाच्येऽण उप्रत्ययः स्यात् । स च नित् । नित्त्वादाद्युदात्तः, प्रियङ्गवश्चमेऽणवश्च मे । 'व्रीहिभेदस्त्वणुः पुमान्' । निद्ग्रहणं 'फलिपाटि–' इत्यादिसूत्रमभिव्याप्य सम्बध्यते ।

---

चेत्याहुः । 'कर्कर्यालुर्गलन्तिका' इत्यमर । **भृमृशी** ॥ **भरुरिति** ॥ 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी । 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः । **शयुरिति** ॥ 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । **तरुरिति** ॥ तरन्ति नरकमनेन रोपकाः । **चरुरिति** ॥ 'अनवस्त्रावितान्तरूष्मपक्व ओदनः' इति याज्ञिकाः । त्रिवृदधिकरणेऽप्येवम् । 'उगवादिभ्यो यत्' इति सूत्रे कैयटस्त्वाह । 'स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्तः' इति । विश्वप्रकाशे तु 'चरुर्भाण्डे च हव्यान्ने' इति नानार्थतोक्ता । 'अथ पुमान् चरुर्हव्यान्नभाण्डयो' इति मेदिनी च । 'हव्यपाके चरुः पुमान्' इत्यमरग्रन्थे । कर्मार्थघञन्तेन कर्मधारयमधिकरणार्थघञन्ते षष्ठीतत्पुरुषञ्चाश्रित्य द्वेधा व्याचक्षाणाः स्वाम्यादयोऽपि नानार्थतायामनुकूलाः । 'तनु काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे । धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने' इति नान्तमेदिनी । विश्वप्रकाशमुदाहरति । **धनुना चेत्यादि** ॥ 'स्यात्तनुस्तनुषा सार्द्धम्' इत्यतः सार्धमित्यनुषज्यते । **धनुरिवेति** ॥ "शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः । 'क्षिप्नुरेनमृजुमाशु विपक्ष सायकम्' इति श्रीहर्षश्लोकशेषः । "धनुर्वंशविशुद्धोऽपि निर्गुणः किङ्करिष्यति" इति धन्वन्तरिः । केचित्तु इह सूत्रे धनिं न पठन्ति । तेषां मते सकारान्तधनुःशब्दमेवाश्रित्योक्तग्रन्था निर्वाह्याः । तस्यापि पुंस्त्वात् । उक्तं ह्यमरेण । 'अथास्त्रियौ धनुश्चापौ' इति । **किन्नर इति** ॥ 'तुरङ्गवदनो मयुः' इत्यमरः । 'मीनातिमिनोति' इत्यात्वन्तु नेह । बाहुलकात् । कटति रसनामिति कटुः । 'कटु स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुल्लिङ्गो रणमात्रके । त्रिषु तद्वत्सगन्धयोश्च मत्सरेऽपि खरेऽपि च' इति मेदिनी । **वटतीति** ॥ 'वटुर्द्विजसुतः स्मृतः' इति संसारावर्तात् । नटवटुरिति तूपचारात् । दन्त्योष्ठ्यादिरयम् । कल्पद्रुमादिप्रामाण्यात् । **अभिव्याप्येति** ॥

१० । **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** । शृणातीति शरुः । 'शरुरायुधकोपयोः' । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' । 'वसुर्मुद्देऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् 'बिदि अवयवे' । बिन्दुः ।

११ । **स्यन्देः सम्प्रसारणं धश्च** । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ।

१२ । **उन्देरिच्चादेः** । उनत्ति इन्दुः ।

१३ । **ईषेः किच्च** । ईषेरुः स्यात्स च किदादेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । 'इषुर्द्वयोः' ।

१४ । **स्कन्देः सलोपश्च** । कन्दुः ।

१५ । **सृजेरसुम् च** । चात्सलोप उप्रत्ययश्च । रज्जुः ।

१६ । **कृतेराद्यन्तविपर्ययश्च** । ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् ।

१७ । **नावञ्चेः** । न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ।

१८ । **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** । फलेर्गुक् फल्गुः ।

---

यद्यपि फलिपाटीत्यादिसूत्र यावदनुवर्तते इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते । तथापि अभिव्याप्येत्येवोचितम् । 'पिबतं सौम्यं मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात् । 'वोतो गुणवचनात्' इति सूत्रे हरदत्तेन अभिव्याप्येति स्पष्टमभिधानाच्चेति भावः । **त्रपु सीसमिति** ॥ तद्धि अग्निं दृष्ट्वा त्रपते लज्जते इव । 'त्रपु सीसकरङ्गयोः' इति मेदिनीकोशः । **हनुरिति** ॥ 'हनुः पुमान् परो गण्डात्' इति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् । 'हनुर्हट्टविलासिन्यां मृत्यावस्त्रगदे स्त्रियाम् । द्वयोः कपोलावयवे" इति मेदिनी । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते' इति दृशिग्रहणात् पाक्षिको दीर्घः । हनूमान् । स्नेहेन बध्नातीति बन्धुः । प्रज्ञादित्वात् बान्धवः । मनुरादिराजो मन्त्रश्च । बिन्दुः पवर्गीयादिः । **कन्दुरिति** ॥ स्कन्दत्यस्मिन् जनताप इति व्युत्पत्त्या भोगस्थानमित्याहुः । अमरस्त्वाह । 'क्लीबेऽम्बरीष भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्' इति । कन्दुर्वा ना इति पूर्वेणान्वयाद्वा पुमानित्यर्थः । **सृजेरसुम् चेति** ॥ सृजतीति रज्जुः । स्त्रियां, 'रज्जुर्वेण्या गुणे योषित्' इति मेदिनी । आगमसकारस्य श्चुत्वेन शः, जश्त्वेन जः । **तर्कुरिति** ॥ कृन्तत्यनेनेति विग्रहः । 'तर्कुटी सूत्रला तर्कुः' इति हारावलीकोशः । **फलिपाटि** ॥ एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी । पट्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्थानषष्ठी । सा धतयोर्विधौ अन्त्येऽल्युपसह्रियते इति

पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यत इति मधु । जायत इति जतु ।

१९ । **वलेर्गुक्च** । 'वल संवरणे' । वल्गुः ।

२० । **शः कित्सन्वच्च** । श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ।

२१ । **यो द्वे च** । ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् ।

२२ । **कुर्भ्रश्च** । बभ्रुः । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ ।' चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ।

२३ । **पृभिदिव्यधिगृधिधृषिभ्यः** । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । 'ग्रहिज्या–' (सू २४१२) इति सम्प्रसारणम् । विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः ।

२४ । **कृग्रोरुच्च** । करोतीति कुरुः । गृणातीति गुरुः ।

२५ । **अपदुःसुषु स्थः** । 'सुषामादिषु च' (सू १०२२) इति षत्वम् । अपष्ठु । प्रतिकूलम् । दुष्ठु । सुष्ठु ।

२६ । **रपेरिच्चोपधायाः** । अनिष्टं रपतीति रिपुः ।

२७ । **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकारश्च** । अर्जयति गुणानृजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः कन्दर्पः । अन्धुः कूपः ।

---

विवेकः । अनागमकाना सागमका आदेशा इति पक्षे तु स्थानषष्ठ्यैवेति बोध्यम् । 'फल्गवसारेऽभिधेयवत् । नदीभेदे मलघ्ना स्त्री' इति मेदिनी । **वल संवरणे इति** ॥ दन्त्योष्ठ्यादिः । यत्तूज्ज्वलदत्तेन सूत्रे पवर्गीयादि पठित्वा, 'बल प्राणने' इत्युपन्यस्तम् । तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अय नाभा वदति वल्गवो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् । धरणिकोशस्थमाह । **बभ्रुरिति** ॥ 'बभ्रुर्वैश्वानरे मूलपाणौ च गरुडध्वजे । बिशाले नकुले पुंसि पिङ्गले त्वभिधेयवत् ॥' इति मेदिनीकोशः । **अन्यतोऽपीति** ॥ 'भ्रः कुश्च' इति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्याहुः । भ्रश्चेति प्रकृतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयाच्चेति बोध्यम् । **पृभिदिव्यधिगृधि** ॥ 'पुरुः प्राज्ये अभिधेयवत् । पुंसि स्याद्देवलोके च नृत्यभेदपरागयोः' इति मेदिनी । **सुषामेत्यादि** ॥ एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु, स्थास्थिन्स्थूनामुपसङ्ख्यातम् । 'अपष्ठु पुंसि बाले च वामे स्यादन्यलिङ्गके' इति मेदिनी । **अर्जिदृशि** ॥ 'अर्ज अर्जने' । अस्य ऋजिरादेशः । दृशेः पशिः । कमेस्तुगागमः । 'अम रोगगत्यादिषु ।' अस्य धुगागमः । 'पशि नाशने' । सौत्रो धातुः । अस्य दीर्घः । 'बाधृ लोडने' । अस्य हादेशः । षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः । **अविशेषेणेति** ॥ चादिगणे तु पश्चिति पठितम् । 'पशु दृश्यर्थमव्ययम्' इति धरणिः । **कन्तुः कन्दर्प इति** ॥ 'कन्तुर्मकराङ्कः'

'पांसुर्ना न द्वयो रजः' । 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः' । बाधत इति बाहुः । 'बाहुः स्त्रीपुंसयोर्भुजः' ।

२८ । **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** । त्रयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ।

२९ । **लङ्घिबंह्योर्नलोपश्च** । लघुः । 'बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' (वा ४७९८) । रघुर्नृपभेदः । बहुः ।

३० । **ऊर्णोतेर्नुलोपश्च** । ऊरु सक्थि ।

३१ । **महति ह्रस्वश्च** । उरु महत् ।

३२ । **श्लिषेः कश्च** । श्लिष्यतीति श्लिकुर्भृत्यः । उद्यतो ज्योतिश्च ।

३३ । **आङ्परयोः खनिशृभ्यां डिच्च** । आ खनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ।

३४ । **हरिमितयोर्द्रुवः** । 'द्रु गतौ' अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ।

३५ । **शते च** । शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान्द्रुमः ।

---

इति त्रिकाण्डशेषः । **पांसुरिति** ॥ 'पडि पसि नाशने ।' चुरादिर्दन्त्यान्तः । **स्त्रीपुंसयोरिति** ॥ उक्त ह्यमरेण । 'द्वौ परौ द्वयोर्भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव 'बाह्वोश्च भुजयोः पुमान्' इति दामोदरः । 'बाहा भुजेऽपुमान्मानभेदाश्वत्रृषवायुषु' इति मेदिन्याम् । टाबन्तोऽप्ययम् । **प्रथिम्रदि** ॥ प्रथते इति पृथुः । 'पृथु. स्यान्महति त्रिषु । त्वक्पत्र्याङ्कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितुं शक्यते अकठिनत्वादिति मृदु. कोमलः । 'भृगु पुमान् मुनौ हरे तटे शुक्रे' इति मेदिनी । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति कोशान्तरम् । **लघुरिति** ॥ 'पृक्काया स्त्री लघुः क्लीब शीघ्रे कृष्णागुरुण्यपि' इति त्रिकाण्डशेषः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ तु स्त्री' इति मेदिनी । **नृपभेद इति** ॥ एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्' इति व्याख्यातम् । **बहुरिति** ॥ बहुस्तु त्र्यादिसङ्ख्यासु विपुले त्वभिधेयवत्' इति मेदिनी । ऊरुर्जङ्घेति उज्ज्वलदत्तः । तन्न । तयोर्भेदात् । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्मणि प्रत्यय. । **उरु महदिति** ॥ कर्तरि प्रत्यय. । **उद्यत इति** ॥ स हि यावत्कार्यं श्लिष्यति लगति व्याप्रियते इति यावत् । **पर्शुरपीति** ॥ 'पर्शुः परशुना सह' इति विश्वः । **हरिद्रुर्वृक्ष इति** ॥ दारुहरिद्रा इत्येके । **तद्वानिति** ॥

३६ । **खरुशङ्कुपीयुनीलंगुलिगु** । पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खोऽश्वश्च । 'शङ्कुर्ना कीलशल्ययोः' । 'पिबतेरीत्त्वं युगागमश्च' । पीयुर्वायसः कालः सुवर्णञ्च । निपूर्वाल्लगि गतावस्मात्कुर्नेर्दीर्घश्च । नीलङ्कुः कृमिविशेषः शृगालश्च । 'नीलाङ्कुः' इति पाठान्तरम् । तत्र धातोरपि दीर्घः । 'लग सङ्गे' अस्य अत इत्वञ्च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः ।

३७ । **मृगय्वादयश्च** । एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ।

३८ । **मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** । मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ।

३९ । **व्यथेः सम्प्रसारणं किच्च** । 'विथुरश्चोररक्षसोः' ।

---

'घुङ्कुभ्या म' । खरुशब्दस्य क्रूरो मूर्ख इत्यर्थः 'द्रय द्दशपादीवृत्त्यनुसारेणोक्तम् । खरुः पतिवरा कन्येत्यपि बोध्यम् । 'खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत्' इति विश्वात्रिकाण्डशषा । **शंकुरिति** ॥ 'शकि शङ्कायाम्' । शङ्कतेऽस्मादिति, 'शङ्कुः कीले गरे शस्त्रे सङ्ख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते' इति विश्वः । **पीयुरिति** ॥ 'पीयुः काले रवौ घूके' इति मेदिनी । **कृमिविशेष इति** । 'नीलङ्कुः कृमिजातौ स्यात् भम्भरालीप्रसूनयो.' इति विश्व । **पाठान्तरमिति** ॥ 'नीलङ्कुरपि नीलाङ्कुः' इति विश्वः । **धातोरपीति** ॥ केचित्तु नीलशब्दे उपपदे गमेष्टिलोपः उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यते इत्याहुः । 'लिगु चित्ते नपुसकम्' इति वररुचिः । **मृगय्वादयश्च** ॥ 'मृगयुः पुसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी । 'मृगयुर्ब्रह्माणि ख्यातो गोमायुव्याधयोरपि । देवयुर्धार्मिके ख्यातो देवयुर्लोकयात्रिके' इति विश्वः । **आकृतिगण इति** ॥ तेन, 'पील प्रतिष्टम्भे' अस्मात्कुः । 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयो.' इति विश्व । भट्टास्तु पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिः गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजहुः । कडि मदे । कण्डुरित्यादि बोध्यम् । **वाशुरा रात्रिरिति** ॥ वाश्यन्ते अस्यामिति विग्रहः । वासुरो गर्दभ इत्यन्ये । 'वाशुरा वासितारात्र्यो' इति मेदिनी । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी । 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि' इति च । **खर्जूरेति** ॥ 'अङ्कूराङ्कुर एव च' इति विश्वप्रकाश । **व्यथेः** ॥ 'व्यथ भयसञ्चलनयो' । अस्मादुरच् कित् स्याद्धातोः सम्प्रसारणञ्च । दशपाद्यां तु ध' किच्चेति पठित्वा धकारमन्तादेशं विधाय विधुरोऽनग्निकः इत्युदाहृतम् । माधवेनापि तदेवानुसृतम् । न त्वेतद्युक्तम् । 'त्वमेषां विथुरा शवांसि । अतिविद्धा विथुरेणाचिदस्त्रा' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि माधवेनोक्तं विदिभिदि इत्यत्र व्यथेः सम्प्रसारणञ्चेति वचनात् कुरचि थान्त रूपमिति । तदतिस्थवीयः । कुरज्विधायके

४० । **मुकुरदर्दुरौ** । मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । 'दॄ विदारणे' धातोर्द्विर्वचनमभ्यासस्य रुक्टिलोपश्च । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रि-भेदयोः' । 'दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरम्' इति विश्वः ।

४१ । **मद्गुरादयश्च** । उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्य-भेदः । 'कब्रृ वर्णे' । रुगागमः । 'कर्बुरं श्वेतरक्षसोः' । बध्नातेः खर्जूरा-दित्वादूरोऽपि । 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः । 'कोकतेर्वा कुक् (च)' (गण १९५) कुक्कुरः—कुकुरः ।

४२ । **असेरुरन्** । असुरः । प्रज्ञाद्यण् । आसुरः ।

४३ । **मसेश्च** । पञ्चमे पादे 'मसेरूरन्' इति वक्ष्यते । 'मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति' । 'मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः' । 'मसूरी पापरोगे स्यादुपधाने पुनः पुमान्' । 'मसूरमसुरौ च द्वौ' इति विश्वः ।

४४ । **शावशेराप्तौ** । शु इत्याश्चर्ये । श्वशुरः । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः ।

४५ । **अविमह्योष्टिषच्** । अविषः । महिषः ।

४६ । **अमेर्दीर्घश्च** । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' ।

४७ । **रुहेर्वृद्धिश्च** । 'रङ्कुशम्बररौहिषाः' । 'रौहिषो मृगभेदे स्याद्रौहिषञ्च तृणं मतम्' इति संसारावर्तः ।

---

सूत्रे व्यर्थेरुपसङ्ख्यानस्याप्रसिद्धत्वात् । तस्मादिह धः किच्चेति दशपादीपाठ पुरस्कुर्वन्तः प्रसादकारादयोऽप्युपेक्ष्याः । कथ तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत् । धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्ताः' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् । **मुकुर इति** ॥ 'मकि मण्डने' । अस्मादुरच् नलोपश्च । **बाहुळकादिति** ॥ धातोरुपधायाः पक्षे उकार इति भावः । 'मुकुरो मकुरोऽपि च' इति विश्व' । 'मुकुरः स्यान्मकुरवत् दर्पणे वकुळद्रुमे । कुलालदण्डे' इति मेदिनी च । **धातोरिति** ॥ केचित्तु गुणो दुगागमश्च निपात्यते इत्याहुः । **कर्बुरमिति** ॥ 'कर्बुर सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्' इति मेदिनी । **अविष इति** ॥ राजा समुद्रश्च । माहिषो महान् । 'तुरीयन्धाम महिषो विवक्ति । उत माता महिषमन्ववेनत् ।' टित्त्वात् ङीप् । महिषी राजपत्नी । **रुहेः** ॥ 'रौहिषो मृगभेदे स्याद्रौहिषञ्च तृण मतम्' इति संसारावर्तः ।

४८ । **तवेर्णिद्वा** । 'तव' इति सौत्रो धातुः । 'तविषताविषावब्धौ स्वर्गे च' । स्त्रियां तविषी–ताविषी नदी देवकन्या भूमिश्च । 'तविषी बलम्' इति वेदभाष्यम् ।

४९ । **नाञि व्यथेः** । 'अव्यथिषोऽब्धिसूर्ययोः' । अव्यथिषी धरारात्र्योः ।

५० । **किलेर्बुक्च** । किल्बिषम् ।

५१ । **इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** । इषिरोऽग्निः । मदिरा सुरा । 'मुदिरः कामुकाभ्रयोः' इति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । 'छिदिरोऽसिकुठारयोः' । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । 'मन्दिरं मन्दिरापि स्यात्' इति विश्वः । 'चन्दिरौ चन्द्रहस्तिनौ' । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । 'मुहिरः काम्यसभ्ययोः' । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । 'शुष शोषणे' शुषिरं छिद्रम् । शुष्कमित्यन्ये ।

५२ । **अशेर्णित्** । आशिरो वह्निरक्षसोः ।

५३ । **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** । अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरुपधाया इत्वम् । 'शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । 'श्रथ मोचने' उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् ।

---

**वेदभाष्यमिति** ॥ 'इन्द्रो मित्रस्य तविषीम् । इन्द्रस्यात्र तविषीभ्यः' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ, 'ओजः पाज.' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । 'तविषः शोभनाकारे भेलेऽब्धिव्यवसाययोः । तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ ॥ तविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी । **किलेर्बुक् च** ॥ 'किल श्वैत्यक्रीडनयोः' । 'किल्बिष पापरोगयोः । अपराधेऽपि' इति मेदिनी । **इषिरोऽग्निरिति** ॥ आहार इत्यन्ये । 'छिदिरः पावके रज्जौ करवाले परश्वधे । मन्दिर नगरेऽगारे क्लीब ना मकरालये । चन्दिरोऽनेकपे चन्द्रे । तिमिरन्ध्वान्तनेत्रामयान्तरे । मिहिरः सूर्यबुधयोः । मुहिरः काममूर्खयोः । रुधिरोऽङ्गारके पुंसि क्लीबन्तु कुङ्कुमासृजोः । शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम् । मूषिके न स्त्रियां नील्योषधौ रन्ध्रान्विते त्रिषु । आशिरो वीतिहोत्रे स्यात् राक्षसे भास्करे पुमान्' इति मेदिनी । **अजिरमङ्गणमिति** ॥ अङ्गेर्ल्युटि अनादेशस्य बाहुलकाण्णत्वमित्येके । अन्ये तु विश्वकोशाद्युपष्टम्भेन दन्त्यमेवेच्छन्ति । इह दशपादीवृत्तौ नञ्पूर्वस्य जीर्यतेः ऋवर्णलोपो निपात्यते इत्युक्तन्तदपि ग्राह्यम् । 'आशुन्दूतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यजिरः इत्यर्थस्यानुगुणत्वात् । 'अजिरं प्राङ्गणे कार्यविषये दर्दुरेऽनिले । शिशिरो ना हिमे न स्त्री त्वृतुभेदे जडे

